**पदैरेव समभिव्याहारवद्भिरभिहिताः स्वार्था आकाङ्क्षायोग्यताऽऽसत्तिसध्रीचीना वाक्यार्थधीहेतव इत्याचार्याः*॥ तत्र**

**मीयमानपरित्यागो बाधके नासति स्फुटे ।**
**दृष्टात्कार्योपपत्तौ च नादृष्टपरिकल्पना ॥**

---

सिद्धान्तमुपन्यस्यति—**पदैरेव समभिव्याहारवद्भिरभिहिताः स्वार्था आकाङ्क्षायोग्यतासत्तिसध्रीचीना वाक्यार्थधीहेतव इत्याचार्याः** ॥ एते च पक्षा यथास्वमवसरे विवरिष्यन्त इति नेह प्रपञ्च्यन्ते ॥

अत्र चेदमाकूतम्—'तथा भू (द्भू)तानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' इति वाक्यार्थधियः समूलत्वं प्रतिपादितम् । तच्च वादिविप्रतिपत्तेः सन्देहमापादितं सत्प्रतिपित्सितं शङ्कितसमारोपितव्यवच्छेदेन प्रकरणेन प्रतिपाद्यते । प्रकरणस्य च यत्प्रकरणिनः प्रयोजनं तेनैव फलवत्तेति न पृथक् प्रयोजनापेक्षेति सन्दिग्धत्वं प्रयोजनवत्त्वं च प्रकरणविषयस्य सिद्धमिति । वाक्यार्थधियः समूलत्वप्रतिपादनं च तद्भूताधिकरणप्रयोजनम् । यथोक्तमारम्भे—

'पदार्थपदसम्बन्धनित्यत्वे साधितेऽपि वा (वः) ।
नैव वेदप्रमाणत्वं वाक्यार्थं प्रति सिद्ध्यति ॥' इति ॥

तथा सिद्धान्तेऽपि—

'शब्दप्रामाण्यनिर्णीत्यै पदार्थेभ्यो यथेष्यते ।
अत्यन्तादृष्टवाक्यार्थप्रतिपत्तिस्तथोच्यते ॥' इति ॥

परेषां तु चतुर्णामपि प्रतिपक्षत्वेन प्रथमोपन्यस्तं स्फोटपक्षं तावन्निराकरोति—

**'मीयमानपरित्यागो बाधके नासति स्फुटे ।**
**दृष्टात्कार्योपपत्तौ च नादृष्टपरिकल्पना ॥'**

---

* (आचार्याः)—'भाट्टाः शबरस्वामिप्रभृतयश्च । तन्त्रवार्तिके अ० २. पा० १. सू० ४६. 'पदार्थैः पदविज्ञातैः वाक्यार्थः प्रतिपाद्यते' इति । शाबरभाष्ये अ० १. पा० १. सू० २५. 'पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति' इति ।' इति टिप्पणी ॥

स खल्वयमेको वाक्यात्मा वाक्यार्थधीहेतुरनुभवाद्वा व्यवस्थाप्यते, अर्थधीभेदाद्वा अन्यथाऽनुपपद्यमानात् । अनुभवोऽपि च वाक्यात्मानमेकमवयविनमनेकवर्णपद[1]-व्यासङ्गिनमङ्गप्रत्यङ्गवर्तिनमिव देवदत्तमनुभवेत्प्रत्यस्तमित-वर्णपदविभागं वा ॥

वर्णाः पदानि चास्यावयवाः सत्तामात्रेण अनुभूय-मानतया वा भवेयुः । न तावत्पूर्वः कल्पः । अवयवि-न्यूनपरिमाणत्वादवयवानाम् । परममहताञ्च वर्णानां तद-

कारिकां व्याचष्टे; तत्र पूर्वार्धोत्तरार्धयोः विषयभेदप्रदर्शनाय विकल्प-यति—**स खल्वयमेको ............ अन्यथाऽनुपपद्यमानात्** ॥ **अर्थधीभेदादिति** ॥ पदार्थधीभ्यो भिन्नाया वाक्यार्थधिय इत्यर्थः । अन्यथानुपपत्तिश्च '**यस्तु स्वतन्त्रसिद्धान्ताभ्यासाहितव्यामोहाप-स्मारः**' इत्यत्र स्पष्टीभविष्यतीति । पूर्वार्धव्यावर्त्यमपि पक्षमर्थतः शब्दतश्च निराकरणं दर्शयितुं विकल्पयति—**अनुभवोऽपि च ...... विभागं वा** ॥ अङ्गानि करचरणादीनि, प्रत्यङ्गानि कूर्परादीनि, **वर्णपदव्यासङ्गिन**-मित्य**ङ्गप्रत्यङ्गवर्तिनमिवे**त्यनयोः प्रत्यङ्गोपमेयता वर्णानां, अङ्गोपमेयता पदानामिति द्रष्टव्यम् ॥

अर्थतोऽपि निराकार्यमपि पक्षं विकल्पयति—**वर्णाः पदानि चास्यावयवाः ......... भवेयुः** ॥ तत्र 'वर्णाः पदानि च सत्ता-मात्रेण वास्यावयवा भवेयुः' इत्यमुं पक्षं दूषयति—**न तावत्पूर्वः कल्पः** ॥ हेतुमाह—**अवयविन्यूनपरिमाणत्वादवयवानाम्** ॥ ततः किमित्यत आह—**परममहतां च वर्णानां तदनुपपत्तेः** ॥ अयमर्थः—सर्वत्र हि कारणपरिमाणादधिकं कार्यपरिमाणं तन्तुपटयोरिव । न च विभुभ्यो वर्णेभ्यः परिमाणाधिक्यं कस्यचित्सम्भवति । अतो नास्ति गोशब्दाव-यवी नाम कश्चिदिति । परममहत्त्वं च वर्णानां—

१. 'अनेकपदवर्णव्यासङ्गिनम्' इति मुद्रितपुस्तकपाठः ।

**नुपपत्तेः । गगनगुणत्वे चाऽद्रव्यतया समवायिकारणत्वाभावेनावयवभावाभावात्[1] ॥**

*** वायवीयावयवारब्धवर्णवादिनामपि वर्णानामाशु-[2]**

---

'वर्णात्मकाश्च ये शब्दा नित्यास्सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥'

इति स्थितमेवेति । ननु गुणवादिनां दर्शने कथमवयवभावाभावो वर्णानां, अत आह—**गगनगुणत्वे ...... अवयवभावाभावात् ॥** इदमाकूतम्—गुणवादिनोऽपि ये नित्यतया यावद्गगनवर्तिनं शब्दमाचक्षते, न तन्मते वर्णानां परममहत्वपरिहारः । ये पुनः "वीचीतरङ्गवृत्त्यैवमन्त्यः श्रोत्रेण गृह्यते" इति क्षणिकमाचक्षते, तन्मते वर्णानामाशुतरविनाशितेति वक्ष्यमाणमपि दूषणं यद्यपि सम्भवति, तथापि तन्नोच्यते, पर्यनुयोज्योपेक्षणप्रसङ्गात् । गुणस्य समवायिकारणत्वाङ्गीकरणशङ्काप्रसङ्गाच्च । किन्तूभयेषां साधारणं दूषणं ब्रूमः—'शब्दो गुणः बहिरिन्द्रियग्राह्यव्यवस्थाहेतुत्वात् (?) गन्धवत्' इत्यनुमानात्,

'पुराणमानवादैश्च, व्योम्नः शब्दं गुणं विदुः ।' (इति)

न च गुणस्य सम्भवतः क्वचिदप्यवयवभावः सम्भवति, समवायिकारणत्वाभावात् । समवायिकारणं हि तन्त्वादि अवयव इत्युच्यते नार्थान्तरम् । समवायिकारणञ्च द्रव्यमेव न गुणादीत्यवस्थितमेव । यथोक्तं कणादतन्त्रे—'क्रियावद्गुणवत्समवायिकारणं द्रव्यमिति द्रव्यलक्षणम्' इति । अतो गुणत्वे सति प्रसज्यमानादद्रव्यत्वाद्द्रव्यत्वव्याप्यं समवायिकारणत्वं निवर्तमानं स्वव्याप्यमवयवत्वमपि निवर्तयतीति ॥

---

१. 'अवयवभावानवकल्पनात्' इति मुद्रितपुस्तकपाठः ।

* (वायवीयावयवारब्धवर्णवादिनां) वाक्यपदीये काण्डे १. श्लो० १०९–१०.

'लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥
तस्य कारणसामर्थ्याद्वेगप्रचयधर्मिणः ।
सन्निपाताद्विभज्यन्ते सारवत्योऽपि मूर्तयः ॥' इति टिप्पणी ॥

२. 'वायवीयावयवारब्धवर्णवादिनामप्याशुतरविनाशशीलतया वर्णानां परस्परमसहभुवां असम्बद्धानां अवयव्यारम्भासम्भवात् । नो खल्वेते' इति मुद्रितपुस्तकपाठः ।

**तरविनाशितया परस्परमसम्भवतामवयव्यारम्भासम्भवात् । न खल्वेते क्रमभाविनोऽवयविनं वा तदसमवायिकारणं वा व्यतिषङ्गं* बिभ्रति । अबिभ्राणाश्च कथमवयवा व्यतिषक्ता वा ॥**

---

ननु वायवीयपरमाण्वारब्धा वर्णा इति केचिद्वदन्ति । अतो वर्णानां द्रव्यत्वात्परममहत्वाभावाच्च युक्तोऽवयवभाव इति चेदाह— **वायवीयावयवारब्धवर्णवादिनामपि ··· अवयव्यारम्भासंभवात् ॥ असम्भवतामिति ॥** युगपदसतामित्यर्थः । असहभुवामिति क्वचित्पाठः । ननु क्रमभाविनोऽप्याग्नेयादयः उत्पत्त्यपूर्वद्वारा यथा परमापूर्वमारभन्ते एवमेतेऽपि व्यतिषङ्गद्वाराऽवयविनमारभन्तामित्याशङ्क्योपपादयति—**न खल्वेते ········ व्यतिषक्ता वा ॥** अयमर्थः— वायवीयारब्धवर्णवादिनोऽपि वर्णानां क्षणिकतामेवाभिमन्यन्ते । ततश्च वर्णानां क्रमेण सत्वाभाजनत्वान्नैकावयविंभरणक्षमत्वम् । एकदेशकालवर्तिनो हि तन्तवः पटं बिभ्रति । न चावयविनोऽसमवायिकारणं परस्परव्यतिषङ्गं बिभ्रति । अवयविव्यतिषङ्गावबिभ्राणाश्च वर्णा यथाक्रमं कथमवयवा व्यतिषक्ता वा भवेयुरिति ॥

इदञ्चाकूतम्—आग्नेयादयो हि क्रमभाविनोऽपि स्थिराण्युत्पत्त्यपूर्वाण्यात्मन्युत्पादयन्तः तद्वाराऽऽत्मनि परमापूर्वमेकमुत्पादयन्तीति युक्तम् । न हि तेऽवयवाः । न च परमापूर्वमवयवि । (अवयवी ?) पुनर्नावयवेभ्योऽर्थान्तरं तेभ्यः पृथक्सिद्धम् । किन्तु तेषु समवेतं तदारब्धं द्रव्यान्तरम् । अवयव्यारम्भश्चावयवैरसमवेत (वायि) कारणं परस्परव्यतिषङ्गमन्तरेण न सम्भवतीति स्थितम् । न च व्यतिषङ्गस्तुल्यदेशकालानां सम्भवतीति कथमवयव्यारम्भाय व्यतिषङ्गं बिभ्रति आरब्धं वाऽवयविनं कथं बिभ्रति, अबिभ्राणाश्च कथं तादृशा इति । क्रियाफलस्य कर्त्रभिप्रायत्वद्योतनार्थमात्मनेपदप्रयोगः । न हि कारणाभावे कार्यं भवतीति भावः । भवति च प्रयोगः—वर्णा नावयविन-

---

* 'व्यतिषङ्गोऽसमवायिकारणीभूतः संयोगः ।' इति टिप्पणी ॥

***एकद्रव्यस्य च कार्यद्रव्यस्यानुपपत्तेः । कारणद्वयाभावे तदविश्लेषात्, द्रव्याविनाशे कृतकनित्यत्वप्रसङ्गात् ॥**

---

मारभन्ते विभुत्वात् गगनवत्, गुणत्वाद्वा शौक्ल्यवत्, क्रमभावित्वाद्वा विनष्टवर्तमानाजातवस्त्वन्तरवत् ॥ न च वर्णा अवयविनं बिभ्रति क्रमभावित्वात् भूतभविष्यद्वर्तमानवत्; न वा वर्णास्तमारभन्ते, असमवायिकारणाभावात्, एकतन्तुवत् । न चैतेऽवयविनं बिभ्रति, क्रमभावित्वात् भूतभविष्यद्वर्तमानवस्त्वन्तरवत् । वर्णाश्चावयवा न भवन्ति अवयविसमवायाभावात् आकाशवत् । न च वर्णाः परस्परव्यतिषक्ताः व्यतिषङ्गाधारत्वाभावात् हिमवद्विन्ध्यवत् इति ॥

ननु मा भूवन्ननेकेऽवयवभूता वर्णा एकस्यावयविन आरम्भकाः, एक एव वर्णः एकं पदावयविनं वाक्यावयविनं वाऽऽरभतामित्यत आह—**एकद्रव्यस्य च कार्यद्रव्यस्यानुपपत्तेः** ॥ एकं द्रव्यं कारणं यस्येति बहुव्रीहिः । कार्यद्रव्यस्येति कर्मधारयः । 'न तावत्पूर्वः कल्प' इत्येतदेव साध्यम् । कथमनुपपत्तिरित्यपेक्षायामाह—**कारणद्वयाभावे तदविश्लेषात् द्रव्याविनाशे कृतकनित्यत्वप्रसङ्गात्** ॥ चतुर्णामपि पदानां यथाक्रमं हेतुहेतुमद्भावेन सम्बन्धः । न कारणमात्रस्यैकत्वेऽनुपपत्तिरुच्यते । किन्तु समवायिकारणभूतद्रव्यस्यैकत्व इति दर्शितं—**एकद्रव्यस्येति** द्रव्यग्रहणेन । न च कार्यमात्रं प्रति, किन्त्ववयविद्रव्यं प्रत्येवेति दर्शितं—**कार्यद्रव्यस्येति** च द्रव्यग्रहणेन । भवति चात्र—**नैको वर्णोऽवयविनमारभते एकद्रव्यत्वात् आकाशवत्; यत्कार्यद्रव्यं तदवयवविश्लेषादेव विनश्यति कार्यद्रव्यत्वात् अवयवित्वाद्वा पटवत् ।**

---

* (एकद्रव्यस्य च)—'अवयवद्वयानारब्धस्य परमाणुगगनादेर्द्रव्यस्य कार्यताया अनङ्गीकारात् । द्रव्यनाशस्यासमवायिकारणनाशजन्यत्वनियमात् द्रव्योत्पत्तौ असमवायिकारणसंयोगस्यापेक्षितत्वेन चाद्यहेतुनाऽलीकत्वरूपकृतकत्वस्य द्वितीयहेतुना नित्यत्वस्य चेति विरुद्धयोर्द्वयोरापत्तेरित्यर्थः ।' इति टिप्पणी ॥

१. 'अनुपपत्तेः, द्रव्यविनाशकारणद्वयाभावेन कृतकनित्यत्वप्रसङ्गात्'—इति मुद्रितपुस्तकपाठः ।

**असहभावित्वादेव चानुभूयमानतयाप्यवयवभावः परास्तो वेदितव्यः । * आशुतरविनाशित्वेनानुभवाना-मेतत्कर्म[1]भूतानामपि तथात्वेन सहभावाभावात् ॥**

यच्चैकद्रव्यं न तस्य कारणविश्लेषः कारणद्वयाभावादाकाशवत् । तथा यस्य न विनाशः तन्नित्यं यथाऽऽकाशः इति । एष एव न्यायः पदे-ष्वप्यारम्भकेषु दर्शनीयः वर्णव्यतिरिक्तपदाभावात् । वायवीयावयवा-रब्धवर्णैश्च वाक्यवत्पदस्याप्यनारम्भात् अनारब्धैश्च पदैर्वाक्यारम्भस्य वन्ध्यासुतोत्पत्तितुल्यत्वादिति । **एवं प्रथमः कल्पो निरस्तः ॥**

'वर्णाः पदानि वास्यावयवा अनुभूयमाना भवेयुः' इति द्वितीयं कल्पमपि निराकरोति—**असहभावित्वादेव चानुभूयमानतयाप्यव-यवभावः परास्तो वेदितव्यः । ............ सहभावाभावात् ॥** इदमाकूतम् । सर्वपूर्वोक्तदोषपरिहारेण प्रत्यवस्थीयते—न वयं सत्तया-वयवभावं वर्णानां सङ्गिरामहे, येन पूर्वोक्तदोषाः प्रसज्ये(जे)युः; किन्त्वनु-भूयमानतया, परममहत्त्वं वा वर्णानामस्तु क्षणिकत्वं वा, उभयथापि पदं वाक्यं वाऽनुभूयमानावस्थाः आरभन्त इति न कश्चिद्दोष इति ॥ अत्रोच्यते—यत्तावदुक्तं क्षणिकत्वपक्षेऽनुभूयमानतयाऽवयवभाव इति तदयुक्तम् । वर्णानामाशुतरविनाशितया यदसहभावित्वं तस्मादेव कारणादनुभूयमानतयापि योऽप्यवयवभावः सोऽपि परास्तो वेदितव्यः । कथं वर्णानामसहभावित्वादनुभूयमानतयाऽवयवभावस्य परासः ? अनु-भवानां क्रमोत्पत्तिद्वारेणेति ब्रूमः । न च क्रमोत्पत्तित्वेऽप्यनुभवाना-मनुभूयमानतया अवयव्यारम्भसम्भव इति वाच्यम् । यतः क्रमो-त्पत्तयोऽनुभवा आशुतरविनाशिनः । 'न हि तत्क्षणमप्यास्ते' इति न्यायात् । एतेषामनुभवानाञ्च ये कर्मभूता वर्णाः तेऽपि पूर्वोक्तक्रमे-णाशुतरविनाशिन इति कथमुभयेषामपि सहभावसम्भवः । अनुभवानां तत्कर्मणाञ्चासहभावित्वे कथमुभयसम्बन्धरूपानुभूयमानतापि प्रत्येक-वर्णवृत्तिकार्यारम्भायावतिष्ठेतेति भावः । अथवा—यद्वत्सत्तयावयव्या-

* (आशुतरविनाशित्वेन)—'अनुभवकर्मत्वेऽप्याशुतरविनाशित्वेनैककालिकत्वा-भावादसमवायिकारणसंयोगाश्रयत्वानुपपत्तेः ।' इति टिप्पणी ॥

१. 'अनुभवानां तत्कर्मतयापि तथात्वेन—' इति मुद्रितपुस्तकपाठः ।

स्यादेतत्; अनवयवमेव वाक्यं वाक्यार्थस्य वाचकम्[१]। न च वर्णा एवानुभूयन्ते न तु तदतिरिच्य-

---

रम्भाभावे वर्णानां कारणमसहभावित्वं सत्तायाः, तद्वदनुभूयमानतया तदारम्भाभावेऽपि कारणमनुभूयमानताया असहभावित्वमित्युचितं(क्तं)-- असहभावित्वादेवेति ॥ अनुभूयमानताया एवासहभावित्वं दर्शयति— आशुतरेति ॥ 'न हि तत्क्षणमप्यास्त' इत्याशुतरविनाशित्वेनानुभवानां कारणेन, यत्खल्वेतत्कर्मभूतानां वर्णानां तथात्वमाशुतरविनाशित्वं तेन कारणेनानुभवकर्मभूतानां सहभावाभावः, तस्मादिति । कर्मभूताना-मिति विशेषणप्रधानो निर्देशः । अनुभवकर्मभूताया (?) (कर्मतया) इति यावत् । अनुभूयमानता च क्षणिकैव । यथाहुः—*........... का पुनरियं प्राप्तिः प्रतीतिरर्थधर्मः कश्चिदेव प्रमातारं प्रति द्वित्वादि-सङ्ख्येवापेक्षाबुद्धिमन्तं प्रति बुद्धिध्वंसाच्च ध्वंसते द्वित्वादिकमिवापेक्षा-बुद्धिविनाशादिति । ज्ञातुरात्मनो ज्ञेयसम्बन्ध एव ज्ञाततेत्यत्रापि पक्षे तस्याः क्षणिकत्वमस्त्येव । यथोक्तं—'कुतः पुनरनुभवावगतिः । अस्मादेव तु सम्बन्धलक्षणात्फलात्कादाचित्कात्' इति । विभुत्वेऽपि वर्णानामेषैव व्याख्येति ॥

एवं पूर्वस्य विकल्पशिरसः श्लोकाभिप्रेतो निराकरणमार्गो दर्शितः । सम्प्रति पूर्वार्धव्यावर्त्यं प्रत्यस्तमितवर्णपदविभागं वेति द्वितीयं पक्षमुपक्षिपति—स्यादेतत्; अनवयवमेव वाक्यं वाक्यार्थस्य वाचकम् ॥ एवकारेण सावयववाक्यपक्षो न शब्दतत्त्वविदां सम्मत इति दर्शयति । यथोक्तं—'अनेकावयवात्मदोषाभिधानं तावन्नभो-रोमन्थनप्रायम(न)भ्युपगमात्' इति । तथा—'नानेकावयवं वाक्यं पदं वा स्फोटवादिनाम्' इति । इमानि पदानि, एते पदार्थाः, एत-द्वाक्यं, अयं वाक्यार्थ इत्यस्ति विभागेन बुद्धिः; अतो यथा पदं पदार्थस्य वाचकं एवं वाक्यं वाक्यार्थस्य वाचकमित्युचितं, न तु वर्णानां पदानां वा वाक्यार्थवाचकत्वमुचितम् । पदपदार्थाभ्यां वाक्य-वाक्यार्थयोः भेदाभावप्रसङ्गात् । न च पदाभिहिता वा पदार्था

---

१. 'वाक्यार्थस्य च वाचकम्' इति मु. पु. पाठः ।

* अत्र व्याख्याने ग्रन्थपातः ।

मानशरीरमपि वस्त्विति साम्प्रतम् । पदमिति वाक्यमिति वानुसंहारबुद्धावभिन्नस्य* वस्तुन उपारोहात् । न खल्वियं बुद्धिरभिन्नवस्तुनिर्भासा परस्परव्यतिभिद्यमानात्मनो वर्णा- नेव गोचरयितुमर्हति । एकत्वनानात्वयोरेकत्रासमवायात् ।

---

वाक्यार्थधीहेतव इति साम्प्रतम् । अशाब्दत्वप्रसङ्गात्, इति वाचकत्वं वाक्यस्याङ्गीकर्तव्यमित्यर्थः । वाक्यमित्यनेनैव प्रत्यक्षानुभववेद्यता स्फोटात्मनो दर्शिता । वर्णविज्ञानविलक्षणस्य पदकदम्बकविज्ञान- विलक्षणस्य वा पश्चाद्गौरिति विज्ञानस्य गामानयेत्येकं वाक्यमिति विज्ञानस्य निरालम्बनत्वायोगात् । न तावद्वर्णा (आ)लम्बनं, तद्बुद्धि- विलक्षणत्वात् । तस्मादर्थान्तरमवलम्बितुमर्हतीति भावः ॥

ननु अस्त्विदं पश्चादेकैकवर्णविज्ञानविलक्षणमेकैकपदविज्ञान- विलक्षणं वा विज्ञानं, न तु तदर्थान्तरावलम्बनम् । वर्णरूपानुविद्धत्वात् रूपान्तरानवभासनाच्च । तदुक्तं भाष्ये—'न च प्रत्यक्षेभ्यो गकारादि- भ्योऽन्यो गोशब्दः भेददर्शनाभावादभेददर्शनाच्च' इति ॥ वार्तिके च—

'वैलक्षण्यं च तस्येष्टं एकैकज्ञानतः स्फुटम् ।
वर्णरूपानुविद्धाच्च न तदर्थान्तरं भवेत् ॥
इति चार्थान्तरत्वं स्यादेकैकस्मात्त्रयस्य तु ।
वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥' इति ॥

अत आह—**न च वर्णा एव ................ वस्तुन (उपारोहात्)** ॥ उपारोहमेव स्फोरयति—**न खल्वियं......... गोचरयितुमर्हति** ॥ बुद्धिवर्णविशेषणाभ्यां सूचितमेव हेतुं दर्शयति— **एकत्वनानात्वयोरेकत्रासमवायात्** ॥

एवं तावत् 'अनवयवमेव वाक्यम्' इत्ययमंशो निरूपितः । 'अनाद्यविद्योपदर्शितालीकवर्णपदविभागम्' इत्यस्यापि व्याख्यानाय

---

१. 'वस्त्विति वाच्यम्' इति मु. पु. पाठः ।
२. 'वाक्यमिति च' इति मु. पु. पाठः ।
* (अनुसंहारबुद्धौ)= 'साहित्यावगाहिज्ञाने ।' इति टिप्पणी ।
३. 'व्यतिरिच्यमान' इति मु. पु. पाठः ।

न च वर्णात्मनस्तत्समवायिनो वाक्यस्य कुतस्तदुपरागवती प्रख्येति वाच्यम् । तदतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावात् । * तदेव हि सार्वजनीनमानसप्रत्यक्षप्रवेद्नीयप्रयत्नभेदभिन्ननानाध्वनिभिः प्रत्येकप्रव्यञ्जनीयं तत्वम् ।

प्रस्तूयते । ननु यदनुसंहारबुद्धिबोध्यमभिन्नं वस्तु तद्वर्णेभ्यो भिन्नं अभिन्नं वा, भिन्नत्वेऽपि वर्णेषु समवेतं असमवेतं वा । न तावदभिन्नं; एकत्वनानात्वयोरेकत्रासमवायात् । भिन्नं चेत्कथं तद्वर्णोपरागवती तस्मिन्प्रख्योपपद्यते । न हि भिन्नं वस्तु भिन्नरूपेणापरेणोपरज्यते घट इव पटेन । न च समवायादुपपद्यते । तदसम्भवात् समवायनिराकरणात् । अतः शब्दत्वमेव वर्णोपरागेण मीमांसकमते तादात्म्यात्, तार्किकमते समवायादवबोध्यत इति कल्पयितव्यं, न तु वैयाकरणसम्मतस्य शब्दतत्त्वस्य तादात्म्यसमवाययोरभावाद्वर्णोपरक्तप्रत्ययोपपत्तिरित्यत आह—**न च वर्णात्मनः तत्सम(वायिनो वाक्यस्य) कुतस्तदुपरागवती प्रख्येति वाच्यम् ।** हेतुमाह—**तदतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावात् ॥** तच्छब्देन वाक्यपरामर्शः । 'अलीकवर्णपदविभागम्' इत्ययमंशो व्याख्यातः । 'अनाद्यविद्योपदर्शिते'त्यस्य व्याख्यानायोपक्रमते । ननु विपरीतं कस्मान्न स्यादत आह—**तथा हि ? (तदेव हि)... प्रत्येकप्रव्यञ्जनीयं तत्वम् ॥** सार्वजनीनैः मानसप्रत्यक्षैः प्रवेदनीया ये प्रयत्नभेदास्तैर्भिन्ना नाना च विलक्षणाश्च ये ध्वनयः तैः । प्रत्येकमेवोत्तरोत्तरप्रकर्षयोगितया व्यञ्ज-

---

* (तदेव) 'वाक्यमेव ।' (तत्वं) 'मानसज्ञानविषयप्रयत्नभेदेन जनितैर्भिन्नैर्नानाध्वनिभिः प्रत्येकमभिव्यञ्जयं स्फोटरूपं परमार्थसदित्यर्थः । तथा च वाक्यपदीये काण्डे १. श्लो० ८८.

> शब्दस्योर्ध्वमभिव्यक्तेर्व्यक्तिभेदे तु वैकृताः ।
> ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥

श्लो० ८९.

> प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये ।
> तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः ॥' इति टिप्पणी ॥

१. 'सर्वजनीन ...... नानाध्वनिप्रत्येक' इति मु. पु. पाठः ।

नीयम् । तदेकमपि भवच्छब्दतत्त्वमिति । सार्वजनीनशब्देन प्रयत्न-विशेषणं वा । 'नन्वर्थाभिव्यक्ताविव शब्दाभिव्यक्तावपि तुल्यः प्रसङ्गः ।' तदुक्तम्—

'यस्यानवयवस्स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥' इति ॥

'अत्रोच्यते—

'प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः ।
प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात् ॥'

अनुपाख्येयरूपविषयज्ञानानां तज्जन्यानां भावनानाञ्च क्रमादिति विग्रहः । 'न तावत्कैवल्ये यौगपद्येऽभिमतानुपूर्व्यभेदे वा विशेषादर्थाभिव्यक्ताविव शब्दाभिव्यक्तावपि तुल्यः प्रसङ्गः' । अस्माभिर्वर्णवादिनं प्रति—

'यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम् ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥'

इत्यस्य पक्षस्य,

'पूर्वोपलब्धिभेदेऽपि भवेदर्थस्य दर्शनम् ।
एकोपलब्धौ नैतेषां भेदः कश्चन दृश्यते ॥'

'पूर्वोपलब्धयो हि क्रमविशेषवत्यः परिगृहीताभिमतविपरीतानुपूर्व्या अक्रमाश्चैकवक्तृप्रयुक्तवर्णविषया विपरीताश्च न पश्चाद्भाविन्यामुपलब्धावपि परिवर्तमानान्वर्णात्मनो भिन्दन्ति' इत्यादिना यः प्रसङ्ग उक्तः स न शब्दाभिव्यक्तौ सम्भवतीति । कैवल्य इति । वक्तृभेदादेकैकस्य ग्रहणमित्यर्थः । यौगपद्य इति । अक्रम इत्यर्थः । अभिमतस्यानुपूर्व्यस्य भेद इति विग्रहः । 'तथा हि—सर्वत्र शब्दसमुत्थापकप्रयत्ननिरूपणचित्तवृत्त्याध्यक्षमुपगृह्यमाणरूपभेदाः प्रयत्ना आत्मन्यायतमानाः स्वभावभेदहेतुतया ध्वनीन्व्यावर्तयन्ति । ततो नियतनादनिबन्धनोपव्यञ्जना न सर्वत्र शब्दभेदाः प्रकाशन्ते' इति यन्मण्डनमिश्रैरुक्तं, तस्य सङ्ग्रहोऽयमिति द्रष्टव्यम् ॥

एवमनादिपदव्याख्यानं कृतम् । अविद्यात्वं वर्णावग्रहस्य दर्शयितुमारभते—**प्रत्येकेति** ॥ अस्यापि व्याख्यानाय ग्रन्थो लिख्यते—

ध्वनयस्तु तुल्यस्थानकरणलब्धजन्मतया परस्परविसदृशतत्तत्पदवाक्यव्यञ्जकानेकविधध्वनिसादृश्येनान्योन्यविसदृशतत्तत्पदवाक्यसादृश्यान्यापादयन्तः[1]* †सादृश्योपधानभेदादेकमप्यनवयवमपि नानावर्णात्मेवावयवीव चाव-

---

'नापि प्रत्येकमवद्योतनादुत्तरवैयर्थ्यप्रसङ्गादवयवशो व्यक्त्यनुपपत्तेस्तदभावात् प्रत्येकमशक्तौ समुदायेऽप्यशक्तेः क्रमजन्मनामनवाप्तयौगपद्यानां समुदायाभावात्पदाभिव्यक्तिर्दुर्लभेति साम्प्रतम् । यतः प्रत्येकमपि तेऽविकलं स्फोटमभिव्यञ्जयन्ति' इति । अत्राविकलशब्दार्थकथनं प्रव्यञ्जनीयमिति प्रशब्देन । अस्तु प्रत्येकं शब्दात्मनोऽभिव्यक्तिः तथापि कथमविद्यात्वम्; किञ्च तन्निमित्तं? तद्दर्शयति—**ध्वनयस्तु... ............ चावभासयन्ति** ॥ तुल्यस्थानकरणलब्धजन्मतया परस्परविसदृशानां तत्तत्पदवाक्यानां व्यञ्जका येऽनेकविधा ध्वनयः तैः । सादृश्ये हेतुः । **सादृश्यं पुनः आपादयन्त** इत्यत्र हेतुः । इवशब्देनापारमार्थिकत्वं दर्शितम् । यथोक्तं—'यद्यपि वर्णपदवाक्यविषया भिन्नात्मानः प्रयत्ना मरुतश्च तदुदीरिताः स्थानाभिघातिनः स्थानाभिघातलब्धात्मानश्च ध्वनयः शब्दाभिव्यक्तिहेतवः, तथापि स्थानकरणादिसाम्येन कथञ्चिल्लब्धसादृश्याः सङ्कीर्णा इव । तन्निबन्धनोऽयं शब्दान्तरेषु शब्दान्तरग्रहणाभिमानः' इति । **परस्परविसदृश**ेति ध्वनिविशेषणं वा । वैसादृश्यसम्भवायानेकविधेत्युक्तम् । अनेकविधत्वस्य वैसादृश्य-

---

१. 'सादृश्यापादयन्तः ?' इति मु. पु. पाठः ।

* (आपादयन्तः)—'परस्परं विसदृशानामपि तेषां पदानां वाक्यानां वा व्यञ्जका येऽनेकविधा ध्वनयस्तेषां तुल्यस्थानकरणजत्वेन सादृश्यात्तदभिव्यञ्जनीयपदवाक्ययोरभेदेन भिन्नयोरपि सादृश्यप्रयोजका इत्यर्थः । अर्थभेदाच्छब्दभेदस्य नित्यस्फोटवादिनः शब्दार्थतादात्म्यवादिनश्चेष्टतया हर्यादिपदेषु 'श्वेतो धावती' इत्यादिकेषु च द्व्यर्थकेषु पदेषु वाक्येषु चाभिव्यञ्जकध्वनिसादृश्यमूल एव तथा व्यवहार इति भावः ॥' इति टिप्पणी ॥

† (सादृश्योपधानभेदात्)—'हकाराद्यभिव्यङ्ग्यत्वेनैव सादृश्यस्य निरूपणीयतया हकारादिवैशिष्ट्यज्ञाने नानाध्वनिविषयकतया तद्गतनानात्वस्यापि प्रतिभासात्स्फोटस्य नानात्वसामञ्जस्ययोः प्रतिभात इति भावः ।' इति टिप्पणी ॥

भासयन्ति, मुखमिव मणिकृपाणदर्पणादयो नियतस्थान-
मनुपप्लवं एकमनेकमिवानेकविधस्थानेमिव *वर्णपरिमाण-
संस्थानभेदोपप्लवमिव दर्शयन्ति । न च प्रत्येकमभिव्यञ्ज-
कत्वेऽपि ध्वनीनां प्रथमादेव ध्वनेर्वाक्यस्य प्रतीतेरुपपत्ते-
स्तन्मात्रनिबन्धनत्वाच्चार्थप्रत्ययोत्पादस्य द्वितीयादीनामा-
नर्थक्यं ध्वनीनामिति युक्तम् । व्यञ्जयन्तोऽपि हि प्रत्येक-

---

पर्यवसाने तत्तद्दितिवत्पदवाक्यविशेषणम् । न चैतच्छ्रोत्रप्रत्यक्ष एवा-
स्माभिरारोप्यते चाक्षुषेऽपि दृष्टत्वादित्यभिप्रायेणाह—**मुखमिव ...... दर्शयन्ति** ॥ अनेकमिवेत्यादीनां त्रयाणां पूर्वैर्नियतस्थानमित्यादिभि-
र्योग्यतया सङ्गतिः । प्रत्येकं व्यञ्जकत्वे केनचिदेकेन तत्सिद्धेरितरानर्थ-
क्यापत्तेर्वर्णा व्यङ्ग्या न तदतिरिक्तमेकमिति चेदत आह—**न च प्रत्येकमभिव्यञ्जकत्वेऽपि ........... व्यक्त्यवभासवाक्यधीहेतु-
भावाभावात्** ॥ एतदप्युक्तम् । 'न चेतरनादवैयर्थ्यम् । अ(भि)-
व्यक्तिभेदात् । तथा हि—पूर्वे ध्वनयोऽनुपजातभावनाविशेषमनसः
प्रतिपत्तुरव्यक्तरूपोपग्राहिणीरुत्तरव्यक्तिपरिच्छेदोत्पादानुगुणभावनाबीज
भाविनीः प्रख्याः प्रादुर्भावयन्ति, उत्तरस्तु पुरस्तनध्वनिनिबन्धनाव्यक्त-
परिच्छेदप्रभावितसकलभावनाबीजसहकारी स्फुटतरविनिविष्टस्फोट-
बिम्ब(मिव)प्रत्ययमभिव्यक्ततरपरिच्छेदमुत्पादयति' इति । विनिविष्ट-
शब्देन (स्व)रूपावस्थितत्वं दर्शयति । अत एव गकारादीनामविनिविष्टत्वे-
नागन्तुकत्वं दर्शितं भवति । अत एव वैयाकरणग्रन्थे 'विनिविष्टस्फोट-

---

१. 'नियतस्थानवर्णपरिमाणसंस्थानमनुपप्लवं' इति मु. पु. पाठः ।

२. 'अनेकस्थानवर्णपरिमाणसंस्थानभेदोपप्लवमिव ।' इति मु. पु. पाठः ।

* (अनेकस्थानवर्णपरिमाणसंस्थानभेदोपप्लवं)—'अनेके स्थानं वर्णः परिमाण संस्थानभेदः उपप्लवश्च यस्य तम् । मुखस्यैकत्वेऽपि दर्पणाद्याधारभेदाद्यथा सामीप्य-दूरस्थत्वादिस्थानस्य मालिन्यादेर्वर्णस्याल्पत्वमहत्वपरिमाणस्य वक्रत्ववर्तुलत्वादेः संस्थान-भेदस्यावयवसन्निवेशविशेषरूपस्य दर्पणादिनाशेन नाशस्य चारोपः तथा स्फोटेऽपीति ।' इति टिप्पणी ॥

३. 'अपि' मु. पुस्तके नास्ति । ४. 'उत्पत्तेः' इति मु. पु. पाठः ।

मिमे ध्वनयो न द्रागित्येव स्फुटतरं स्फोटात्मानमवभासयितुमीशते, अपि *त्वारूपमवभासयन्ति[1]। पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तरोत्तराभिव्यक्तिक्रमेण त्वन्त्यो ध्वनिः स्फुटतरं विशिष्टस्फोटविज्ञानमाधत्ते[2] इति न वैयर्थ्यं द्वितीयादिध्वनीनाम्। नापि पूर्वेषां; तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यस्य ध्वनेरसहायतया व्यक्त्यवभासवाक्यधीहेतुभावाभावात्। तद्यथा रत्नपरीक्षिणः पुनः पुना[3] रत्नतत्त्वमीक्षमाणस्य रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि सहसैव न समानासमानजातीयव्यावृत्तं रत्न-

बिम्बप्रतिबिम्बप्रत्ययं' इति बिम्बग्रहणं कृतम्। प्रतिबिम्बस्थानीया गकारादयः, बिम्बस्थानीयः स्फोटात्मेति भावः। द्वितीयादीनां पूर्वेषां वाऽऽनर्थक्याभावे दृष्टान्तमाह—**तद्यथा रत्नपरीक्षिणः .... चकास्ति रत्नतत्त्वम्**॥ पूर्वश्चेतश्शब्दो मनोविषयः उत्तरस्तु ज्ञानविषयः इति। एतदप्युक्तम्। 'यथा रत्नपरीक्षिणः परीक्षमाणस्य प्रथमसमधिगमानुपाख्यातमनुपाख्येयरूपप्रत्ययोपजनितसंस्काररूपाहितविशेषायां बुद्धौ क्रमेण चरमे चेतसि चकास्ति रत्नतत्त्वम्; न ह्य(न्यथा स्फुटप्रकाश उपपद्यते पुर इव पश्चादपि, विशेषाभावात्।)' †............... हेतुतया योजने सामानाधिकरण्यप्रतीतिभङ्गः। व्याख्यानञ्चास्य ग्रन्थस्य पूर्ववदेव कृतप्रायम्। उपलम्भादित्यपि पूर्ववत्। उभयसिद्धञ्चैतत्। अस्माभिस्तावदुक्तं समारोपिततत्त्वं; भवद्भिरपि॥

* (आरूपमाभासयन्ति) (अवभासयन्ति)—'ईषद्रूपमस्फुटम्' इति यावत्। तथा च शास्त्रदीपिकायां—'न कश्चिदपि नादोऽस्य स्फुटाभिव्यक्तिं करोति। किन्तु सर्वे ते प्रत्येकं व्यञ्जकाः। स तु न द्रागेव स्फुटमवभासते प्रथममस्फुटावभासितः सन् पुनःपुनः श्रूयमाणः स्फुटो भवतीति।' (अ० १. प० १. सू० ५) इति टिप्पणी॥

१. 'आरूपमाभासयन्ति' इति मु. पु. पाठः।

२. 'स्फुटतरविनिष्टस्फोटबिम्बज्ञानमाधत्ते' इति मु. पु. पाठः।

३. 'रत्नस्वरूपं वीक्षमाणस्य' इति मु. पु. पाठः।

† अत्र व्याख्यानमातृकायां ग्रन्थपातः।

तत्त्वमवभासयन्ति, किन्तु पञ्चषदर्शनजनितभावनासचिव-चेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वम् । न च वर्णावभासा मिथ्याप्रत्ययाः तत्संस्कारा वा कथं व्यक्ततया परिच्छित्तिहेतव इति साम्प्रतम् । आराद्वनस्पतौ *हरितप्रवाहस्य व्यक्ततरं वनस्पतितत्त्वप्रतीतिहेतुत्वदर्शनात् । वर्णाश्च समारोपितदीर्घत्वादिधर्मभाजः पारमार्थिकार्थधी-भेदोपलम्भात् । तथा हि---लौकिका नग इति गिरिमप-दिशन्ति, नाग इति दन्तिनं; अजिनमिति चर्म, अजीन-

---

'दीर्घादेर्नन्वनङ्गत्वावाचकाः धर्मतो भवन् ।
इत्थं प्रतीयमानाः स्युः वर्णा नः प्रतिपादकाः ॥
यादृशा पूर्वदृष्टोऽसावर्थो गम्येत तादृशा ।
भ्रान्त्या कथं प्रतीतिश्चेन्नासावर्थभिर्तिं प्रति ॥' इति ॥

यतः । एतदुक्तं भवति । तवारोपितधर्मभाजो वर्णा वाचकाः, ममापि आरोपितदीर्घादिधर्मकवर्णरूपभाजः स्फोटा इत्येव विशेषः । समारोपितधर्मभाजः शब्दाः प्रतिपादका इत्युभयसिद्धमिति । उपलम्भ-मेव स्फोरयति---**तथा हि लौकिकाः........व्यवहाराविसंवादात्** ॥ **लौकिका इति** ॥ लोकप्रमाणको हि शब्दार्थनिर्णय इति भावः । यथोक्तं---'लोकतोऽर्थप्रयुक्ते' इति । **गिरिमिति** ॥ 'हिमाचलो नाम नगाधिराजः' इत्यादौ । **अपदिशन्तीति** ॥ अपदेशतो ह्युपलम्भसिद्धि-रिति भावः । **दन्तिनमिति** ॥ 'नागं नागोऽधावत्' इत्यादौ । एवमकारे दर्शितम् । इकारेप्याह---**अजिनमिति चर्म** ॥ ऐणेयेन वाजिनेन ब्राह्मण-मिति । **अजीनमिति** ॥ 'ज्या वयोहानौ' इति धातोर्निष्ठान्तं पदम् । जीनमिति 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' 'संयोगादेरातो धातो-

---

१. 'न च वर्णावभासा' इत्यारभ्य 'अर्थधीभेदोपलम्भात्' इतिपर्यन्तं मुद्रितपुस्तकपाठ एव दीयते, व्याख्याने ग्रन्थपातात् ।

* (हरितप्रवाहस्य)---'दूरस्थवृक्षे हरिततृणसमूहज्ञानधारायां इत्यर्थः ।' इति टिप्पणी ॥

मिति ज्यानिहीनं[१]; शुन इति तु कर्मभूतान्सारमेयान्, शून इति तु वृद्धिमापन्नम्। न[२] च ते प्रत्यया भ्रान्तयः, व्यवहाराविसंवादात्॥

---

यण्वतः' इति निष्ठातो नत्वम्। नञ्समासः। जीनमिति भावे चेन्निष्ठा तदा बहुव्रीहौ नञ्। कर्तरि चेत्तत्पुरुष इति विवेकः। **ज्यानिहीनमिति**॥ 'ग्लाज्याम्लाहाभ्यो निः' इति क्तिन्प्रकरणे निः। ज्यानिर्हानिः तद्रहित इत्यर्थः। ज्यानिशब्दप्रयोगात्तु जीनमिति भावे निष्ठेति गम्यते। नञ्समासे बहुव्रीहेस्तत्पुरुषस्य भावनिष्ठायाश्च कर्तृनिष्ठायाः प्रथमप्रतीतत्वादङ्गीकरण इदं ज्यानिहीनमित्यर्थकथनमात्रमिति द्रष्टव्यम्। ज्यानिशब्देन धात्वर्थकथनं हीनशब्देन ततोऽपगतं तस्या अकर्तारं निर्दिशतीति। **शुन** इति 'पूर्णक! लगुडेन शुनो वारय' इति कर्मभूतान्। **शून** इत्यत्र प्रातिपदिकार्थमात्रविवक्षा। अत्र तु कर्मत्वमपीति सूच्यते। तथा तत्र तदेव कर्मत्वं (देकत्वं), अत्र बहुत्वमिति च। **सारमेयानिति**॥ तत्र गुणवत्वमात्रं (अत्र) जातिभेदोऽप्यस्तीति भावः। **शून इति**॥ 'टुओश्वि गतिवृद्ध्योः' इति धातोर्निष्ठान्तं पदम्। 'ओदितश्च' इति निष्ठातो नत्वम्। **वृद्धिमापन्नमिति**॥ उपलक्षणमेतद्गतिमतोऽपि। अथ वा, विवक्षितत्वाद्वृद्धिमत्वस्य तथा निर्देशः। अथ वा, 'हन हिंसागत्योः' इतिवद्गतौ प्राचुर्याभावाद्वृद्धावेव प्राचुर्यादेवं निर्देशः। तुशब्दौ परस्परापेक्षयेति। पारमार्थिकार्थविशेषणस्यासिद्धतां परिहर्तुं '**न च**' इत्यादि। '**व्यवहाराविसंवादात्**'॥ यथाहुः बाह्या अपि—'प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः। अविसंवादनम्' इति। न चाविसंवादोऽसिद्ध इति वक्तव्यम्। प्रत्यक्षविरोधात्। न हि सारमेयादिप्रत्ययाद्वृद्धिमदादिप्रत्ययो विशिष्यत इति। उक्तञ्च—'नासावर्थमिर्ति प्रति' इति। एतच्चोक्तं **मण्डनमिश्रैः**—'भेदेनान्वीयमानमपि मणिकृपाणदर्पणादिषु तत्त्वस्य भेदविरोधात्तत्त्वप्रत्ययेन समुत्सारितसकलभेदं मुखमवसीयते तथा दीर्घादिभेदानुगमेऽप्यवर्णात्मा प्रत्यभिज्ञाबलेन

---

१. 'ज्यानिविहीनं' इति मु. पु. पाठः।

२. 'न चैते भ्रान्तयः' इति मु. पु. पाठः।

यस्तु स्वतन्त्रसिद्धान्ताभ्यासाहितव्यामोहापस्मारः सार्वजनीनमपि पदमिति वाक्यमिति चैकविषयमनुभव-

---

विधूतभेद एको गम्यते । तथा पदमपि स्वप्रत्ययावगम्यमानैकस्वभावं किञ्चिद्भेदपरामर्शेऽप्यभिन्नं निर्धार्यते' इति ॥

ननु अनुभव एव तावत्परेषामसिद्धः । स एव हि भवता समर्थनीयः । तद्विहायान्यदुच्यमानमजातराजपुत्रक्रीडनकोपमामापद्यत इति चेत्तत्राह—यस्तु स्वतन्त्रसिद्धान्ताभ्यासाहितव्यामोहापस्मारः ...... नै ?(चै)कविषयमनुभवमवजानीते ॥ स्वतन्त्र एवाश्रितस्य सिद्धान्तस्याभ्यासेनाहितो व्यामोह एवापस्मारो यस्येति विग्रहः । ईदृशी चावज्ञाभिप्रेता ॥

नन्वस्तीदं पश्चादेकैकवर्णविज्ञानविलक्षणं विज्ञानं न तु तदर्थान्तरावलम्बनं वर्णरूपानुविद्धत्वात्, रूपान्तरानवभासाच्च । तथा हि—त एव वर्णात्मानं(त्मानः) पुनः पुनः परिगतपरिच्छेदाः तत्रैवाप्यवभासन्ते न तु रूपान्तरम् । अर्थान्तरविषयत्वे तु यथा वर्णविज्ञानानि परस्परविषयरूपप्रत्यवमर्शशून्यानि प्रकाशमानरूपान्तराणि प्रकाशन्ते तथेदमपि स्यात् । वैलक्षण्यं तु पूर्वोपलब्धीनामेकैकवर्णगोचरत्वादस्यैव समुचितविषयत्वादिति नार्थान्तरविषयत्वं वैलक्षण्यमात्रात्सिद्ध्यति । यदि चैकस्मात्त्रयमर्थान्तरमस्तु (सः) प्रत्ययस्य विषयो न तदतिरिक्तः कश्चिदर्थात्मा, वर्णपरित्यागेन बुद्धावप्रतिभासनात् । अथ मतं गौरित्येकं विज्ञानं ; को वाहान्यथा । ज्ञेयन्तु नैकं ज्ञेये तु तद्ग्राह्यतयैकार्थकारितया चैकत्वभ्रमः एकत्वोपचारो वा वनादिवत् । अपि च शैघ्र्यात् (अल्पाक्षरत्वाद्वा) गोशब्दे भवेदप्येकत्वभ्रमः । देवदत्तादिशब्दे तु स्पष्ट एव भेदः प्रकाशते । तदुक्तं—'न च प्रत्यक्षेभ्यो गकारादिभ्योऽन्यो गोशब्दः, भेददर्शनाभावात् अभेददर्शनाच्च ॥'

'वैलक्षण्यञ्च तस्येष्टमेकैकज्ञानतः स्फुटम् ।
वर्णरूपानुविद्धाच्च न तदर्थान्तरं भवेत् ॥

मवजानीते स इत्थं शिक्षणीयः—'वत्स, वेत्सि ताव-च्छब्दादर्थधीरुदीयत' इति ॥

यदि चार्थान्तरत्वं स्यादेकैकस्मात्त्रयस्य तु ।
वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥
गौरित्येकमतित्वन्तु नैवास्माभिर्निवार्यते ।
तद्ग्राह्यैकार्थताभ्यां च शब्दे स्यादेकतामतिः ॥
शैघ्र्यादल्पाक्षरत्वाद्वा गोशब्दे सा भवेदपि ।
देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते ॥' इति ॥

समर्थनमारभते—**स इत्थं शिक्षणीयः** ॥ इदमाकूतम्—नानुभवः समर्थनीयः सार्वजनीनत्वात् । स्वतन्त्रसिद्धान्ताभ्यासाहितव्यामोहापस्मारत्वात्तु स केवलमस्माभिर्व्यामोहापस्मारवारणाय कारुणिकैर्भूत्वा वक्ष्यमाणप्रकारेण शिक्षणीयो निजशिष्यवत् इति । शिक्षामेवाह—**वत्स वेत्सि तावच्छब्दादर्थधीरुदीयत इति** ॥ उदयत इति ग्रन्थः । इण् गतौ अस्मादुदेति स्यात् । अथवा 'इ गतौ' इत्यस्येदं रूपम् । तत्र कर्तरीयत इति सिद्ध्यति । इदमाकूतम्—एवमयं प्रष्टव्यः '**शब्दादर्थधीरुदीयत**' इत्येतत्त्वयाऽवगम्यते वा न वा । यदि नावगम्यते, हन्त! अयमचिकित्स्योऽयमपस्मार इत्युपेक्षणीयं शिक्षणम् । यद्यवगम्यते ततश्चिकित्स्योऽयमिति प्रयत्यते । त्वं च वत्स! '**शब्दादर्थधीरुदीयत**' इत्येतद्वेत्स्येव तावन्न संशयः, यतः त्वयास्मान्प्रति साधनदूषणवाक्यानि प्रयुज्यन्ते । अस्मत्प्रयुक्तानि च परिजिहीर्षसीति । अपि च '**अर्थधीरुदयमासादयति**' इति यदादावेव वर्णितं तस्येदं फलं प्रदर्शितमिति वेदितव्यम् । अनेन च '**अर्थधीभेदाद्वा अन्यथानुपपद्यमानात्**' इति द्वितीयार्धव्यावर्त्यः पक्षः समर्थयितुमुपक्रान्तो वेदितव्यः । *......

१. 'अपजानीते' इति मु. पु. पाठः ।

२. 'स इत्थं शिक्षयितव्यः' इति मु. पु. पाठः ।

३. 'उदयते' इति मु. पु. पाठः । 'उदीयते' इति ३. पु. पाठः ।' इति टिप्पणी ॥

* अत्र व्याख्यानमातृकायां पत्रषट्कपरिमितग्रन्थपातः ।

*सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति। नो खल्विमां विधातुमुत्सहन्ते वर्णाः, विकल्पासहत्वात् । ते हीमां प्रत्येकं वा विदधीरन्नागदन्ता इव शिक्यावलम्बनं, मिलिता वा ग्रावाण इव पिठरधारणम् । न तावत्प्रत्येकम्; अनुपलम्भविरोधात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च । नापि मिलिताः, तथाभावाभावात् । तथा हि—वास्तवो वा समूह एतेषामाश्रीयते? अनुभवोपाधिको वा? तत्र सर्वेषामेव वर्णानां नित्यतया विभुतया च वास्तवी सङ्गतिरतिप्रसङ्गिनी केषाञ्चिदेव पदवाक्यभावं नापादयितुमर्हति। अनुभूयमानानान्त्वनुभवानुसारिणी तत्पर्यायेण पर्यायवती न समूहभाग्भवति । न खल्वेकदेशकालानवच्छिन्नाः समूहवन्तो भवन्ति भावाः, अतिप्रसङ्गात् ॥

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णः †प्रत्यायकोऽर्थस्य । तेन तथैवैकानुभवकल्पनेति चेत्—न; विचारासहत्वात् । को नु खल्वयं संस्कारोऽभिमत आयुष्मतः—किं स्मृतिबीजं? अन्यो वा प्रोक्षणादिभ्य इव व्रीह्यादेः? न तावदन्यः । न ह्यसावसहभुवां वर्णानां जन्य एकः सम्भवति, उक्तादेव प्रकारात् । वर्णैर्यथास्वं

---

* 'सेयं' इत्यारभ्य 'शक्या कल्पयितुं' इति पर्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् ।

† (प्रत्यायकोऽर्थस्य)—'तथा च वाक्यपदीये काण्डे १. श्लो. ८५.

'नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥' इति' इति टिप्पणी ॥

१. 'अर्थसंस्कारः' इति ३. पु. पाठ इति टिप्पणी ।

क्रमविशेषशालिभिरन्येऽन्ये जन्यन्ते संस्काराः, तेषाञ्च स्थेम्ना सम्भवत्यन्त्यवर्णसाचिव्यमभिधेयप्रत्ययजननायेति चेत्—अहो! बतास्य स्वपक्षदृष्टिपक्षपातः, यद्बहुतर दृष्ट-सम्भारकल्पनाक्लेशमपि न चेतयते संस्कार एव तावदनुप-लब्धपूर्वस्तस्य च नानात्वमिति । आग्नेयादिवत्कल्पना-गौरवं न कल्पकगर्हिततामावहतीति चेत्—न; इहा-न्यथासिद्धेः । आग्नेयादयो हि विशरारवो 'दर्शपूर्णमासा-भ्यां स्वर्गकामो यजेत' इति चिरभाविने फलाय विहिताः समिदादयश्च प्रोक्षणादयश्च तदङ्गान्यसहभावीनि इति बहुपूर्वकल्पनां विना नोपपद्यत इति नासौ प्रमाणमार्गागतो दोषमावहति । इह पुनरेकगोचरानुभवमात्रादभिधेयप्रत्ययो-त्पत्त्युपपत्तेरप्रामाणिकानेककल्पना न दोषमावहतीत्यचतु-रस्रम् ॥

वासनापरनामा संस्कारः स्मृतिबीजमन्त्यवर्णसह-कारी, तस्य च स्मरणफलप्रसवोन्नीतसद्भावस्यार्थधीजन्मनि सहकारितामात्रं कल्पनीयम्; तन्न गौरवमिति चेत्—न;

......'शक्त्यन्तरकल्पनामात्रन्त्विह विषये, कार्यान्तरदर्शनात्; न तु स्फोटपरिकल्पना युक्ता, क्लृप्तवस्तुशक्तिमात्रपरिकल्पनया कार्योपपत्तौ अर्थापत्तिक्षयात्' इति । उक्तञ्च वार्तिके—

'अथवा वासनैवास्तु संस्कारात्स(रः, स)र्व एव हि ।
दृढज्ञानगृहीतेऽर्थे संस्कारोऽस्तीति मन्यते ॥
तस्यार्थबुद्धिहेतुत्वे विसंवादोऽत्र निर्णये ।
तद्भावभावितो(ता) हेतुरन्यत्रेव प्रतीयते ॥' इति ॥

१. 'स्वदृष्टिपक्षपातः' इति २. पु. पाठः इति टिप्पणी ॥
२. 'लोकगर्हिततताम्' इति ३. पु. पाठः इति टिप्पणी ।

स्वभावविपर्यासानुपपत्तेः, अदृष्टान्तरकल्पनाप्रसङ्गाच्च। तथा हि—यो यद्गोचरानुभवयोनिः संस्कारः स तत्रैव धियमाधत्त इति तस्य स्वभावः; यद्यन्यस्मिन्नप्यादधीत किञ्चिदेवैकमनुभूय सर्वः सर्वमर्थं * विजानीयात्। अपि च, संस्कार इति च वासनेति च भावनेति च प्राचीनानुभवजनितमात्मनः सामर्थ्यभेदमेव स्मृतिज्ञानप्रसवहेतुमाचक्षते। न † चास्यैवार्थप्रत्ययप्रसवशक्तिः शक्या कल्पयितुम्। सा खल्वभिधेयधीप्रसवोन्नीतसद्भावा फलवत्यात्मन्येव युक्ता कल्पयितुं न पुनरतद्वत्यामस्य ‡ स्मृतिजनन[1]शक्तौ। यथा[2] खल्वियं मानान्तरसिद्धा, एवमसावपि। न चात्मनि

'तदिदमसमञ्जसमिव लक्ष्यते'। स्फोटं विहायार्थप्रसवशक्तेरन्यत्र कल्पने संस्कारविषयत्वपारिशेष्यासम्भव इति। अस्यैवेति॥ संस्कारविषयत्वमेव कल्पनाया दुरुपपादम्। दूरे क्लृप्तशक्तिकतयोपपत्तिरित्यर्थः। एतदेव प्रकटयति—सा खल्वभिधेयधीप्रसवोन्नीतसद्भावा फलवत्यात्मन्येव युक्ता कल्पयितुं न पुनरतद्वत्यामस्य स्मृतिजननशक्तौ॥ सेति। शक्तिः। फलवति—धीमति। अस्य—आत्मनः। फलवतीत्यनेनौचित्यान्तरङ्गत्वे सूचिते। अतद्वत्यामित्यनेनानौचित्यबहिरङ्गत्वे। अतद्वतीत्वमेव व्यक्तीकुर्वन्नुक्तं—अस्य स्मृतिजननशक्ताविति॥ उक्तं हि—'प्राचीनानुभवजनितमात्मनः सामर्थ्यं'इत्यादीति भावः॥

यच्च संस्कारकल्पनायां भवतां निबन्धनं तदविकलमात्मन्यपीति दर्शयन्नाह—यथा खल्वियं मानान्तरसिद्धा एवमसावपि॥ माना-

* (विजानीयात्)—'तथा च वर्णस्मरणमेव स्यान्न त्वर्थस्मरणमिति भावः।' इति टिप्पणी॥

† (अस्यैवार्थप्रत्ययप्रसवशक्तिः)—'संस्कारस्यैव शक्तिरूपत्वेन तत्र शक्त्यन्तरकल्पनानवकाशादिति भावः।' इति टिप्पणी॥

‡ (स्मृतिजननशक्तौ)—'बोधरूपफलरहितायां शक्तौ संस्कारस्य स्मृतिजनकत्वमनुपयोगात्कल्पयितुं न युक्तमित्यर्थः।' इति टिप्पणी॥

१. 'स्मृतिजननम्' इति २ पु. पाठ इति टिप्पणी॥

२. 'यथा चेयं' इति मु. पु. पाठः।

शक्तिकल्पनायां सा च, तस्याश्चान्या, अशक्तायाः कार्यकरत्वाभावादिति शक्त्यन्तरकल्पना, न तु स्मृतिप्रसवशक्ताविति साम्प्रतम् । न हि कल्प्यमाना शक्तिः शक्त्यन्तरयुक्ता कल्प्यते, तन्मात्रादेव सम्भवे शक्त्यन्तरकल्पनायामनवस्थापातात्, स्मृतिप्रसवशक्तावपि च साम्यासाम्यात्[2] । तथा चादृष्टान्तरं नाम परिकल्पनीयमिति । तदेवं * महद्गौरवमापन्नमिति ॥

---

न्तरसिद्ध इति विपरिणम्यानुषङ्गः । फलवत्त्वन्त्वधिकमात्मनीति भावः । एवं द्वितीयो हेतुर्व्याख्यातः । स्मृतिहेतोरदृष्टाददृष्टान्तरमात्मनि कल्पयितुमुचितमिति ॥

नतु नादृष्टान्तरं कल्पनीयं, गौरवात् । स्मृतिबीजे हि धर्ममात्रं कल्प्यम् । अदृष्टान्तरे तु धर्म्यपि । अतोऽन्तरङ्गत्वादिकमपहाय लाघवपक्षपातिन्यार्थापत्त्या स्मृतिबीजे धर्ममात्रं कल्प्यते नादृष्टान्तरमित्याशङ्क्याह—**न चात्मनि शक्तिकल्पनायां ......... साम्प्रतम् ॥ न चेति साम्प्रतं युक्तमित्यन्वयः** । इतिशब्दनिर्दिष्टं दर्शितम्—**आत्मनीत्यादिना** ॥ एवं शङ्कां प्रतिषिध्य हेतुमाह—**न हि कल्प्यमाना ......... तदेवं महद्गौरवमापन्नमिति** ॥ वासनापक्षसमाप्ताविति शब्दः । **अदृष्टान्तरमिति** ॥ अदृष्टान्तरवर्जनाय हि वासनापक्षः प्रस्तूयते, तस्मिन्नाश्रीयमाणेऽपि ततो न मुच्यसे, शक्तेः शक्त्यन्तरस्यात्यन्तादृष्टस्य कल्पनात् । एतच्च द्वितीयस्य हेतोर्व्याख्यानान्तरमिति द्रष्टव्यम् । अथवा—पूर्वो ग्रन्थोऽस्यैवाङ्गीकरणद्योतनाय । एष एव व्याख्यानग्रन्थः । एतच्चोक्तं—'शक्तेः शक्त्यन्तरायोगः' इति ॥

---

१. 'शक्तिकल्पनायां सत्यां तस्याश्चाशक्तायाः कार्यकरणाभावाच्छक्त्यन्तरकल्पना' इति मु. पु. पाठः ।

२. **'साम्यात्, यथा वा अदृष्टान्तरं मा नाम कल्पनीयमिति तदेव गौरवमापन्नम्'** इति मु. पु. पाठः । 'तथा चादृष्टान्तरं नाने(मे)'ति ३ पु. पाठ इति टिप्पणी ॥

* (गौरवं)—'शक्तिरूपे संस्कारे शक्त्यन्तरकल्पनारूपम्' इति टिप्पणी ॥

**तावत्स्मृतिसमारोहिणो वर्णा वाचकाः, ततो न गौरवमिति चेत्—**

सिद्धान्तान्तरमपि वर्णवादिनां दूषयितुमाशङ्कते—तावत्स्मृति-समारोहिणो वर्णा वाचकाः ततो न गौरवमिति चेत्॥ इदमाकूतम—'न खलु साक्षाद्भावनानां व्यापारमभिधेयप्रत्ययहेतुमुपेमः। अपि तु ताभ्यः स्थायित्वेन प्रतिलब्धयौगपद्याभ्यः प्रत्यवमृष्टसकलवर्णरूपात्मा एकः प्रत्यय उदेति । (तत्र) स एव वा तद्विपरिवर्तिनो वा वर्णाः तत्र समधिगतसहभावा जनयन्त्यर्थावबोधमिति वृथा शब्दपरिकल्पनाश्रमः। स्मृतौ च सहभावः न स प्रत्यक्षे इति चेत्—किमत्र प्रत्यक्षवर्तिना यौगपद्येन ? सर्वथा ज्ञानविषयं तदर्थ्यते, तच्च स्मरणज्ञानेऽस्त्येव । स चैष प्रत्ययः स्मरणप्रत्यक्षरूपाभ्यामुभयात्मा सदसद्वर्णावभास्यन्त्यवर्ण(गोचर) इष्यते कैश्चित् । अन्यैस्तु सकलवर्णपदोपलब्धिनिबन्धननिखिलभावना-बीजजन्मा युगपदखिलवर्णरूपपरामर्शी चरमवर्णप्रत्यक्षोपलब्धिसम-नन्तरं स्मरणैकरूपः सङ्गीर्यते । क्रमसमधिगतात्मसु न युगपदनुस्मरण-मित्यपि मिथ्या, यतः सकलवादिनामभिमतं पौर्वापर्यपर्यालोचितेष्वपि भावेषु समुच्चयावग्राहि विज्ञानम् । तदनुपगमे हि तत्प्रकारानुपातिषु शतं विंशतिरिति समुच्चयदर्शनं विहन्येत । तस्माच्छ्रोत्रमनोजन्मभिः क्रमवतीभिरपि बुद्धिभिरवधृतेष्वपि भावेषु वर्णात्मसु पुरस्तात्, परस्ता-द्भवक्रम(स्तादद्वयमक्रम)मखिलवर्णरूपावगाहि स्मरणमवकल्पते। तत्र च सङ्क्रान्तप्रतिबिम्बा वर्णाः समीहितकार्ये प्रत्यनन्तरतां नातिक्रामन्तीति । लौकिकवचनमपि समञ्जसं—'शब्दादर्थं प्रतिपद्यामहे' इति । शास्त्रकारवचनमपि—'भावमाख्यातेनाचष्टे' इति । तदिदमुक्तम्—

> 'यद्वा प्रत्यक्षरं (तः) पूर्वं क्रमज्ञातेषु यत्परम् ।
> समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥' इति ॥
> 'तत्र ज्ञाने च वर्णानां यौगपद्यं प्रतीयते ।
> नावश्यं यौगपद्येन प्रत्यक्षस्थेन तद्भवेत् ॥
> चित्ररूपाञ्च तां बुद्धिं सदसद्वर्णगोचराम् ।
> केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥

१. 'स्मृतिसमारोहिणो वर्णा वाचकास्तत्र गौरवमिति चेत्' इति मु. पु. पाठः।

न; अक्रमानुक्रमविपरीतक्रमाणां[1] तत्राविशेषेणार्थ-धीसमुत्पादप्रसङ्गात्[2] । अथापि स्यात् [3]ये यथास्वं वर्णानुभवैराहिताः संस्कारः (ते) सम्भूय निखिलवर्णविषय-मेकमेव स्मरणफलं प्रसुवते, तदारोहिणो[4] वर्णा अव्यवधाना

---

अन्त्यवर्णे च विज्ञाते सर्वसंस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥

सर्वेषु चैतदर्थेषु मानसं सर्ववादिनाम् ।
इष्टं समुच्चयज्ञानं क्रमज्ञातेषु सत्स्वपि ॥

न चेत्तदभ्युपेयेत क्रमदृष्टेषु नैव हि ।
शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥

तेन श्रोत्रमनोभ्यां स्यात्क्रमज्ञातेषु यद्यपि ।
पूर्वज्ञानं परस्तात्तु युगपत्स्मरणं भवेत् ॥

तदारूढास्तदा वर्णा न दूरेऽर्थावबोधनम् ।
शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥' इति ॥

एतदपि दूषयति—**नेति** ॥ कारणमाह—**अक्रमानुक्रमाविपरीत-क्रमाणां तत्राविशेषेणार्थधीसमुत्पादप्रसङ्गात्** ॥ अत्र वर्णानामिति विशेष्यं द्रष्टव्यम् । **तत्रेति** स्मृतिं परामृशति । एवं चोद्यपरिहारौ संक्षिप्य दर्शयित्वा चोद्यं तावद्व्याचष्टे—**अथापि स्यात्** ......... **न कदाचिददृष्टकल्पनेति** ॥ **संस्कारास्सम्भूयेत्यनयोर्मध्ये त इति** पदमध्याहार्यं यदि न दृश्यते । **स्मरणफलमिति** कर्मधारयः । **तदा-रोहिणः**—तादृशस्मरणफलारोहिणः । **अव्यवधाना इति** । अनेन लौकिक-वचसः शास्त्रकारवचनस्य चोपपत्तिस्सूचिता । पूर्वोक्तं '**स्मृतिसमारोहिणो वर्णा वाचकाः**' इत्येतद्व्याख्याय 'ये यथास्व'मित्यादेरर्थस्य कृत्स्नस्यासिद्धिं

---

१. 'क्रमाक्रमविपरीतक्रमाणां' इति मु. पु. पाठः ।
२. 'समुत्पादनप्रसङ्गात्' इति मु. पु. पाठः ।
३. 'ये' इति मुद्रितपुस्तके नास्ति ।
४. 'तद्रूपारोहिणो वर्णाः' इति मु. पु. पाठः ।

अभिधेयधियमादधति । न चैकैकवर्णोपलब्धिप्रतिलब्ध-जन्मानः संस्काराः प्रतिवर्णगोचरास्तावतीरेव तत्क्रमवतीः स्मृतीरपि भावयितुमीशते । तत्र तत्र * निरपेक्षाणां कारण-भावोपलम्भात् । न पुनरखिलवर्णगोचरमेकमिति रमणीयम्; तत्र तत्रानपेक्षाणां कारणत्वेऽपि मिलितानामप्येक(प्यनेक)-गोचरैकविज्ञानजननदर्शनात् । तथा हि—संस्काराश्चक्षुरा-द्यनपेक्षाः स्मरणकारणं, चक्षुरादयश्च तदनपेक्षा आलोचन-कारणं, प्रत्यभिज्ञाने तु संस्कारापेक्षाश्चक्षुरादयः कारण-

---

परिहर्तुं न चेत्यारम्भः । न चेति रमणीयमित्यन्वयः । **निरपेक्षाणां कारणभावोपलम्भादिति** ॥ यत्र यत्र कारणकार्यभावः तत्र तत्र निरपेक्षाणामेव कारणभाव उपलब्धः, यथा—बीजाङ्कुरयोः । न हि माषबीजसापेक्षं मुद्गबीजं स्वाङ्कुरं जनयति, चक्षुरादयो वा रूपानु-विद्धम् । अतस्संस्काराणामपि निरपेक्षाणामेव कारणत्वमिति न प्रत्येक-वर्णानुभवजनितसंस्काराणां युगपदेकस्मरणफलप्रसवसम्भव इति । अरमणीयत्वे पूर्वोक्तहेत्वसिद्धिरेव कारणमुक्तम् । **तत्र तत्र निरपेक्षाणां कारणत्वेऽपीति** । क पुनर्दृष्टमिति चेदित्याशङ्कयोपपादयतोक्तं—**तथा हीत्यादि** ॥ **आलोचनकारणमिति** ॥ अपरोक्षज्ञानसाधनमित्यर्थः ।

---

१. 'तावतीरेव क्रमवतीः' इति मु. पु. पाठः ।

२. 'स्मृतीर्भावयितुं' इति मु. पु. पाठः ।

* (निरपेक्षाणां)—'कारणत्वेऽपि भावोपलम्भात्' इति २. पु. पाठः । 'संस्कारान्तरनैरपेक्ष्येण प्रत्येकं संस्काराणां कारणत्वेन स्मृतिरूपफलदर्शनादित्यर्थः ।' इति टिप्पणी ॥

३. 'निरपेक्षकारणभावोपलम्भात्' इति मु. पु. पाठः ।

४. 'अखिलवर्णगोचरं स्मरणमेकमिति' इति मु. पु. पाठः ।

५. 'मप्यनेकगोचरैकविज्ञान' इति मु. पु. पाठः ।

६. 'संस्कारश्चक्षुराद्यनपेक्षः स्मरणकारणं चक्षुरादयस्तन्निरपेक्षा आलोचन-कारणम्; प्रत्यभिज्ञाने तु संस्कारसापेक्षाः चक्षुरादयः । एवं तत्र तत्रोहनीयमिति न काचिददृष्टकल्पनेति ।' इति मु. पु. पाठः ।

मित्यवश्यं तत्र तत्रोहनीयमिति न कदाचिददृष्टकल्पनेति। तन्नास्ति; क्रमयुक्तेभ्य इव युगपद्विपरीतक्रमयुक्तेभ्योऽप्यभिधेयप्रत्ययप्रसङ्गात्। न खल्वेकोपलब्धिवर्तिनामस्ति कश्चिद्विशेषो वर्णानाम्। न हि वास्तवः क्रमो नित्यानां विभूनां तेषाम् उपलब्धिनिमित्तत्व ? (स्त्वाश्रीयते।) सा चेदेका कुतस्त्यस्तर्हि क्रम एषाम् ?

---

**इत्यवश्यं तत्र तत्रोहनीयमिति**। एवं प्रत्यक्षज्ञानमधिकृत्य दर्शितम्; एवमेवान्यत्रापि यत्र यत्र कारणभावः तत्र तत्रावश्यमेव शिष्यैरूहनीयमेव। निरपेक्षाणां कारणत्वेऽपि मिलितानामपि एककार्यजननमित्यर्थः। ततो न गौरवमित्यस्यानुसन्धानमिति। **न कदाचिददृष्टकल्पनेति**। इतिशब्दो व्याख्यानसमाप्तौ॥ एवं चोद्यं व्याख्याय परिहारमपि व्याचष्टे—**तन्नास्ति; क्रमयुक्तेभ्य इव युगपद्विपरीतक्रमयुक्तेभ्योऽप्यभिधेयप्रत्ययप्रसङ्गात्**॥ **युगपदिति**॥ भावप्रधानो निर्देशः। यौगपद्ययुक्तानां विपरीतक्रमयुक्तानां चेति विग्रहः। क्वचित्तु यौगपद्येत्येव पाठः। अनेन च पूर्वत्राक्रमाणां अनुक्रमाणां विपरीतक्रमाणां चेति विग्रहो दर्शितः। अनुगतः क्रमो येषु तेऽनुक्रमाः; विपरीतः क्रमो येषां ते विपरीतक्रमाः। क्रमराहित्यं यौगपद्यम्; अनुक्रमग्रहणं च दृष्टान्तार्थम्। अर्थशब्दश्चाभिधेयवचन इति दर्शितं वेदितव्यम्। तत्राविशेषेणेत्येतद्व्याचक्षाणः एतदेव प्रतिपादयति—**न खल्वेकोपलब्धिवर्तिनामस्ति कश्चिद्विशेषो वर्णानाम्**॥ **कश्चिदिति**॥ यौगपद्यं वा क्रमो वा विपरीतक्रमत्वं वेति। **वर्णानामित्यनेन** पूर्वत्र विशेष्यश्च सूचितम्। विशेषाभावश्च स्फोरयति—**वर्णानामित्यनेन**। सूचितमेवार्थं स्फोरयति—**न हि वास्तवः क्रमो नित्यानां विभूनां तेषाम्; उपलब्धिनिमित्तत्वा(?) (स्त्वाश्रीयते)**॥ अस्तु तर्हि स एवेति चेदत आह—**सा चेदेका, कुतस्त्यस्तर्हि क्रम एषाम्**॥

---

१. 'अदृष्टकल्पनेति तन्नास्ति' इति मु. पु. पाठः। 'तन्नास्तीति २ पु. पाठः। तथा च सकलवर्णविषयकमेकं स्मरणं सम्भवतीति भावः। एतावत्पर्यन्तमाक्षेपः; उत्तरस्तु परिहारः।' इति टिप्पणी॥

२. 'क्रमाभिव्यक्तेभ्य इव यौगपद्यविपरीतक्रमाभिव्यक्तेभ्यः' इति मु. पु. पाठः।

न च [1]प्राचीनप्रत्येकवर्णानुभवनिचयवर्तिनी *परापरतापि प्रभासत इति साम्प्रतम् । वर्णस्वरूपमात्रगोचरतया स्मृतिरियं न [2]तदनुभवानपि गोचरयितुमर्हति प्रागेव तत्परापरतामिति । इति युगपद्विपरीतक्रमाभिव्यक्तानामनुक्रमाभिव्यक्तेभ्यो विशेषाभावादेकोपलब्धौ सर्वार्थप्रत्ययप्रसङ्गः ॥

नन्वेका स्मृतिरुपलब्धिरभिप्रेता । सा च पूर्वानुभवनिचयजनितसंस्कारनिचयजन्या स्वकारणद्वारा कारणकारणवर्तिनीं परापरतामपि लप्स्यत इत्याशङ्क्याह—**न च प्राचीनप्रत्येक ......... इति साम्प्रतम्** ॥ प्रत्येकग्रहणमनुभवनिचयवर्तित्वस्फोरणाय । असाम्प्रतत्वे कारणमाह—**वर्णस्वरूपमात्रगोचरतया ......... तत्परापरतामिति** ॥ धर्मिणोऽप्यविषयीकरणे धर्मविषयीकरणस्य दूरापास्तत्वादिति भावः । इतिर्हेतौ । इतिशब्द उत्तरत्राप्यनुवर्तते । उपसंहरति—**इति युगपत् ........... सर्वार्थप्रत्ययप्रसङ्गः** ॥

अत्र चाक्रमानुक्रमविपरीतक्रमाणां मध्येऽनुक्रमाणामवधित्वं, इतरेषामवधिमत्त्वं, अर्थधीसमुत्पादप्रसङ्गश्च यद्विवक्षया ये वर्णा येन क्रमेण प्रयुक्ताः तस्य तत्क्रमान्यथात्वेऽपि प्रसङ्गमात्रमिति न मन्तव्यं, किन्त्वन्येषामप्यर्थानां प्रतीतिप्रसङ्गो विवक्षित इति दर्शितम् । **एकोपलब्धौ**—एकस्य पदस्य वाक्यस्य वोपलब्धौ । **सर्वार्थेति** ॥ वर्णानामेव पदवाक्यत्वात्तेषाञ्च भेदाभावात्क्रमस्य चाभावादिति भावः ॥ एतदप्युक्तम्—

---

१. ‘प्राचीनप्रत्येकवर्णानुभवनिचयमनुवर्तनीयं परापरता प्रतिभासत इति साम्प्रतम् ।’ इति मु. पु. पाठः ।

* ‘पदज्ञाने वर्णपौर्वापर्यप्रतिभासादनुभवगतक्रमविषयकत्वं स्मृतावङ्गीकार्यमिति भावः ।’ इति टिप्पणी ॥

२. ‘तत्तदनुभवानपि गोचरयितुमर्हति तत्परापरतां तु प्रागेवेति युगपद्विपरीतक्रमाभिव्यक्तानां क्रमाभिव्यक्तेभ्यो विशेषाभावादेकोपलब्धौ सर्वेषामर्थप्रत्यायनप्रसङ्गः ।’ इति मु. पु. पाठः ।

'पूर्वोपलब्धिभेदेऽपि भवेदर्थस्य दर्शनम् ।
एकोपलब्धौ नैतेषां भेदः कश्चन दृश्यते ॥' इति ॥

'पूर्वोपलब्धयो हि क्रमविशेषवत्यः परिगृहीताभिमतविपरीतानुपूर्व्याः अक्रमाश्चैकवक्तृप्रयुक्तवर्णविषयाः विपरीताश्च न पश्चाद्भाविन्यामुपलब्धौ अनुविपरिवर्तमानवर्णात्मनो भिन्दन्ति, असम्प्राप्तनिरन्वयनिरुद्धयोर्विशेषाभावादित्युक्तम् । एकोपलब्धौ तु यौगपद्यान्नानुपूर्वीतो विशेषः । न चेदमिह समीचीनम्—उपलम्भगोचरमिदं यौगपद्यं नोपलभ्यविषयं, उपलभ्या वर्णाः क्रमभाज एवैकया प्रख्यया प्रख्यायन्त इति । तथा हि—स्वतो वर्णा नित्यतया विभुतया च (न) देशनिबन्धनं नापि कालनिबन्धनं परापरभावमनुपतन्तीति प्रख्यानिबन्धन एष समाश्रीयते। तच्चेदमद्वयमक्रमं यद्विपरिवर्तिनः (तेन?) ते प्रत्ययहेतवः । न चेदं पूर्वोपलब्धिसम्बन्धिनीं परापरतां गोचरयति वर्णावलम्बितया तदुपलब्धीनामविषयीकरणेन । न च समीहितावध्यवधिमद्भावं पौर्वापर्यं प्रत्येतुमर्हति । न चैकस्मिन्नानावर्णावयवात्मनि भिन्ने पदे भिन्नमवध्यवधिमद्भावमपेक्षितुं क्षमते । प्रतिवर्णोपलम्भनप्रभावितानि च भावनाबीजानि कामं संहतिसमापादनादेकमनेकावलम्बि स्मरणं जनयेयुः । तावता चरितार्थेभ्यो न परो वर्णात्मसु विशेषो लभ्यते । तथा च सति यथाकथञ्चित्परस्तादधिगतसंवेदनेभ्यो निखिलसंस्कारजन्मनि चरमसमधिगमेऽतिशयविरहादर्थपरिच्छेदः स्यात् । न चैवं दृश्यते । अतस्तदतिरिच्यमाननिमित्तावाप्तजन्मायमित्यनुमीयते' इति ॥

युगपदभिव्यक्तानां विपरीतेन क्रमेणाभिव्यक्तानाञ्चेति विग्रहः । अनुसृतः क्रमोऽनुक्रमः, तेनाभिव्यक्तेभ्य इति । इमामुक्तिमनुसृत्य पूर्वं '**अक्रमानुक्रमविपरीतक्रमाणां**' इत्यत्रापि तत्पुरुषसमास एव न बहुव्रीहिरित्यूह्यते । किन्तु '**क्रमयुक्तेभ्यः**' इति निर्देशात् '**एकोपलब्धिवर्तिनामस्ति कश्चिद्विशेषो वर्णानां**' इति च दर्शनाद्बहुव्रीहित्वमाश्रितमिति वेदितव्यम् । केचित्तु—तत्पुरुषत्वमाश्रित्याक्रमानुक्रमविपरीतक्रमाणामेकोपलब्धौ विशेषाभावेनासत्त्वस्य तुल्यत्वेनेति व्याचक्षते, तत्र '**अर्थधीसमुत्पादप्रसङ्गः**' इत्यस्य '**क्रमयुक्तेभ्यः**' इति, 'अवि-

तस्मात्स्वसिद्धान्तव्यामोहमपहायाभ्युपेयतामनुसंहारबुद्धेरेकपदवाक्यगोचरता । न चास्या गोचर इव प्रत्येकध्वनिव्यञ्जनीयः तदर्थोऽपि प्रत्येकवर्णव्यञ्जनीयः इति साम्प्रतम् । प्रथमादेव वर्णादभिधेयधीसमुत्पादादानर्थक्यं द्वितीयादीनामित्युक्तम् । न चैतत्पदेऽपि तुल्यम् । तस्य हि प्रत्यक्षस्य प्रतिध्वनिव्यञ्जनीयस्याभिव्यक्तितारतम्यं नानाध्वनिष्वायतत इति नानर्थक्यमुत्तरेषाम् । न चेय-

शेषात्' इत्यन्तस्य 'परापरतां' इति व्याख्यानमविशिष्टेनोपसंहार एवेति । एवन्तावत् 'नो खल्विमामाधातुमुत्सहन्ते वर्णाः' इत्येतत्प्रसाधितम् । सम्प्रति तदेव 'सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति' इत्यत्र पर्यवसाययति—तस्मात्स्वसिद्धान्त ...... वाक्यगोचरता ॥ यस्मान्नान्यावग(न्या ग)तिर्विद्यते तस्मादित्यर्थः । तथा च 'सार्वजनीनमानसप्रत्यक्षप्रवेदनीयनानाध्वनिभिः प्रत्येकव्यञ्जनीयं तत्त्वम्' इत्येतदेवावस्थितम् ॥

यद्यत्र कश्चिद्ब्रूयात्—यथा भवतामनुसंहारबुद्धेर्विषयः प्रत्येकध्वनिभिर्व्यज्यते एवमस्माकं वर्णैरर्थ इति व्यर्था स्फोटकल्पनेति ; तत्राह—न चास्या गोचर इव···इति साम्प्रतम् ॥ इदंशब्देनानुसंहारबुद्धेः तच्छब्देन च गोचर(स्य) परामर्शः । हेतुमाह—प्रथमादेव...... इत्युक्तम् ॥ उक्तिः 'न तावत्प्रत्येकम्' इत्यत्र । अस्याः गोचर इवेति वदतोऽभिप्रायं निषेधति—न चैतत्पदेऽपि तुल्यम् ॥ पदशब्दो वाक्यस्याप्युपलक्षणम् । अतुल्यत्वे कारणमाह—तस्य हि प्रत्यक्षस्य...... सम्भविनी ॥ प्रत्यक्षाप्रत्यक्षशब्दाभ्यां सूचितमर्थं सूच(स्फोर)यति—

१. 'स्वसिद्धान्ताभ्यासव्यामोहं' इति मु. पु. पाठः ।

* (अभ्युपेयतां)—'अभ्युयेयतां' इति ३ पु. पाठः । इति टिप्पणी ॥

२. 'अनुसंहारबुद्धिरेकपदवाक्यगोचरा' इति मु. पु. पाठः ।

† 'ध्वनिशब्दो नास्ति ३ पु. पाठः' इति टिप्पणी ।

३. 'प्रतिवर्णव्यञ्जनीय' इति मु. पु. पाठः ।

मप्रत्यक्षेऽभिधेये विधा [1]सम्भविनी । *प्रत्यक्षगोचरोऽपि (ह्यभिव्यक्ति)तारतम्यभाक् न मानान्तरगोचरः । स खलु गृह्यते वा न वा, न पुनर्व्यक्तोऽव्यक्तश्चेति ॥

तदिदमसमञ्जसम् । तथा हि—चक्षुषी निमील्य डिण्डि[2]करागं परित्यज्य निरूपयत्वत्रभवान् [3]पूर्वा बुद्धी-

---

प्रत्यक्षगोचरो ...... न मानान्तरगोचरः ॥ 'न मानान्तरगोचरः' इत्येतदेव व्याचष्टे—स खलु ...... अव्यक्तश्चेति ॥ एतदप्युक्तं— 'अथ कस्मादेष स्फोटोपलब्धिक्रमोऽर्थोपलब्धावेव नाश्रीयते, यतः—

'प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिता ।
मानान्तरेषु ग्रहणमथवा नैव हि ग्रहः ॥'

इन्द्रियं हि व्यक्तावभासिनोऽव्यक्तावभासिनश्चार्थप्रत्ययस्य हेतुः; यथा—दूराद्ग्रहणे सूक्ष्मार्थनिरूपणायाञ्च । लिङ्गशब्दादयस्तु निश्चितात्मानं प्रत्ययमुपजनयन्त्येकरूपं, नैव वा; न तत्र व्यक्ताव्यक्तग्रहणबुद्धिभेदः; अर्थश्च शब्दप्रत्ययादवसेयः, स्फोटात्मा तु प्रत्यक्षवेदनीय इति निरवद्यम्' इति ॥

अत्र प्रतिविधत्ते—तदिदमसमञ्जसं ........ अत्र भवान् ॥ चक्षुषी निमील्येति सावधानत्वाय । डिण्डिकरागं परित्यज्येति ॥ डिण्डिकानां यादृशो भवति रागः तादृशं रागं परित्यज्य मध्यस्थतामवलम्ब्य निरूपयतु । रागान्धचित्तो हि परमार्थनिरूपणायाशक्त इति । यथोक्तं—'दोषे(षो)ऽप्य(ह्य)विद्यमाने(नो)ऽपि तच्चिन्ता(त्ता)नां प्रकाशते' इति ॥ तथा—'रागाद्युपप्लुते चित्ते द्रष्टा विस्मरणात्मनि ।' इति । अत्रभवान्—तत्रभवानित्यर्थः । निरूपणकर्म दर्शयति—पूर्वा बुद्धीः

---

१. 'सम्भवति' इति मु. पु. पाठः ।

* (प्रत्यक्षगोचरो हि)—'प्रत्यक्षगोचरो ह्यभिव्यक्तितारतम्यभाग् न मानान्तरगोचरः स खलु' इति ३ पु. पाठः श्लिष्टः । २ पु. भाग् मानान्तरगोचरगोचरः । न खल्विति पाठः' इति टिप्पणी ॥

२. 'डिण्डिकमतरागं' इति मु. पु. पाठः ।

३. 'पूर्वबुद्धीः' इति मु. पु. पाठः ।

रेकैकवर्णगोचराः, उत्तराश्च विशदपदवाक्यावगाहिनीः ; किमेता गादिबुद्धयो गकारादिमात्रनिर्भासाः आहोस्वित् गकाराद्याकारं किञ्चिदेकमनाकारमासु सम्प्लवते, मुखमिव मणिकृपाणदर्पणादिषु विभिन्नवर्णपरिमाणमप्येकम् । इतरथा हि तत्र मुखमिति बुद्धिव्यपदेशावभिन्नवस्त्ववगाहिनौ न स्याताम् । न सम्प्लवते चेद्गादय एव परस्परं नानात्मानः प्रकाशन्ते न पुनस्तदाकारं पदतत्त्वमेकं प्रकाशत इति सिध्यति । न जातु गजगवयकरभरुरवः परस्परव्यति-

...... वाक्यावगाहिनीः ॥ नन्वेतादृशीरुभयीरपि बुद्धीरुक्तरीत्या निरूप्यैवास्माभिरेवमुच्यते ; भवतस्तु किं तत्र प्रष्टव्यं तत्पृच्छ्यतामिति चेदत्राह—किमेता गादिबुद्धयो ........ विभिन्नवर्णपरिमाणमप्येकम् ॥ दृष्टान्तसिद्धिमप्याह—इतरथा हि तत्र ......न स्याताम् ॥ एवं विकल्प्य प्रथमे पक्षे दूषणमाह—न सम्प्लवते चेत् ........ इति सिद्ध्यति ॥ एवञ्च सति पदतत्त्वस्यैवैकस्य विवर्ता गकारादयः इत्येतन्न सिद्ध्यतीति दृष्टान्तेनाह—न जातु .......विवर्ता भवन्ति ॥ अथ वा—न पुनस्तदाकारं पदतत्त्वमेकमित्यत्र भवतीति सिद्ध्यति, 'अस्तिर्भवन्तीपरः' इति न्यायात् । तेन न पुनरेकस्य पदतत्त्वस्य विवर्तकारितेत्यर्थः । अत्रैव दृष्टान्तदानमुत्तरेण । गकारौकारविसर्जनीया नैकस्य पदतत्त्वस्य विवर्ताः । एकपदात्मना प्रत्येकमप्रतिभासात् ।

१. 'उत्तरां च विशदपदवाक्यावगाहिनीं' इति मु. पु. पाठः ।
२. 'अनाकारं' इति मु. पु. नास्ति ।
३. 'मानकृपाणेति ३ पु. पाठः' इति टिप्पणी ।
४. 'भिन्नवर्णपरिमाणसंस्थानमेकं' इति मु. पु. पाठः ।
५. 'हि' इति मु. पु. नास्ति ।
६. 'अभिन्नवस्तुग्राहिणौ' इति मु. पु. पाठः ।
७. 'परस्परानात्मानः' इति मु. पु. पाठः ।
८. 'गजगवयहयरासभरुरवः' इति मु. पु. पाठः ।

भिद्यमानमूर्तयो भासमाना रासभादिविवर्ता भवन्ति। सम्प्लवते चेदस्ति[1] तर्हि गकारादिषु भिन्नेष्वप्यभिन्नवस्तु[2]निर्भासा शब्दः शब्द इति प्रख्या लौकिकपरीक्षकाणाम्। तत्किं शब्दत्वमेव वाचकमभिधेयभेदानाम्। तथा च तस्य सर्वस्या(र्वत्रा)विशेषात्सर्वेऽर्थाः[3] सर्वशब्देभ्यः प्रतीयेरन्। न खलु कारणानियमे कार्यभेदनियमो भवितुमर्हति, तस्याकस्मिकत्वप्रसङ्गात्। गकाराद्याकारभेदविवर्तं[4] *शब्दत्व-

रासभादेरिव गजादय इति विवर्तपक्षे गकारादयो गोपदात्मना प्रथेरन्, तद्विवर्तत्वात्, मणिकृपाणदर्पणादिषु मुखवत्। अतस्तदात्मना भासनं निवर्तमानं स्वव्याप्यं विवर्तत्वमपि निवर्तयतीति प्रतिबन्धसिद्धिः। द्वितीयं कल्पं दूषयति—**सम्प्लवते चेत् ...... परीक्षकाणाम्** ॥ यदि सम्प्लवोऽस्ति तर्ह्येषैव प्रख्या ससम्प्लवा नान्येत्यर्थः। अस्या उभयवादिसिद्धत्वादिति भावः ॥

अयञ्च शब्दत्वादेर्वाचकत्वस्योभयवाद्यनभिमतस्यापि शिष्याणां हितकाङ्क्षया दूषणाय प्रस्तावः। सम्प्रति स्फोटवादिनं प्रत्युपहसन्नाह—**तत्किं शब्दत्वमेव वाचकमभिधेयभेदानाम्**। सुगमो ग्रन्थः। न चैतत्त्वयाऽभ्युपगम्यते, स्पष्टदोषत्वादित्यभिप्रायेणाह—**तथा च तस्य ....... आकस्मिकत्वप्रसङ्गात्** ॥ **तथा चेति** ॥ यदि शब्दत्वमेव वाचकं तदेत्यर्थः। **तस्य**—शब्दत्वस्य; **सर्वत्र**—सर्वेषु शब्देषु; **तस्य**—कार्यभेदनियमस्य; **आकस्मिकत्वं**—निष्कारणत्वम्। अत्र पार्श्वस्थश्चोदयति—**गकाराद्याकारभेदविवर्तं...तन्नातिप्रसङ्ग इति चेत्** ॥ गकाराद्याकारभेदा विवर्ता यस्येति बहुव्रीहिः। एकस्यापि शब्दत्वस्य विवर्त-

१. 'अस्ति हि गकारादिषु' इति मु. पु. पाठः।

२. 'भिन्नेष्वभिन्न' इति मु. पु. पाठः।

३. 'सर्वत्राविशेषात्' इति मु. पु. पाठः।

४. 'गकाराद्याकारविवर्तभेदं शब्दत्वमभिधेयभेदाभिधायकं' इति मु. पु. पाठः।

* (शब्दत्वं)—'भेदशब्दमिति २ पु. पाठः। गकाराद्याकारैरारोपितैर्भिद्यमानः शब्दो यत्र तादृशं पदं वाक्यं वेति तस्यार्थः।' इति टिप्पणी ॥

मभिधेयभेदानामभिधायकं, तन्नातिप्रसङ्ग इति चेत्— न । प्राप्ताप्राप्तविवेकेन गादीनामेवाभिधेयधीहेतुभावात्[1] । अन्यथा सत्त्वगुणत्वादीनामपि तत्प्रसङ्गात् । अत्यल्पमिदम्, अखिल-मेव कार्यजातं[2] सत्त्वसामान्यनिर्माणं प्रसज्येत । अपि च, शब्दत्वं चरमविज्ञान इव पूर्वेष्वपि प्रत्ययेषु प्रथत इति नास्ति तिरोहितमिव किञ्चनेति तेभ्योऽप्यर्थप्रत्ययप्रसङ्गः । एतेन वर्णत्वमपि परास्तमभिधेयधीहेतुभावेनेति वेदितव्यम्[3] ।

---

भेदेन भेदात्कारणभेदनियमे कार्यभेदनियमोपपत्तिरित्यर्थः । कश्चित्तु— गकाराद्याकारविवर्तेनेदं शब्दत्वमित्येव पाठः । परिहरति— नेति ॥ कारणमाह— प्राप्ताप्राप्तविवेकेन ........ हेतुभावात् ॥ 'तदागमे हि दृश्यते' इति न्यायोऽनेन दर्शित इति वेदितव्यम् । एवमेव हेतुं साधयति— अन्यथा सत्त्वगुणत्वादीनामपि ........ प्रसज्येत ॥ अन्यथेति ॥ प्राप्ताप्राप्तविवेकाभाव इति । तच्छब्देनाभिधेयहेतुभावं परामृशति । आदिशब्देन श्रोत्रग्राह्यतादेरुपादानम् । इदं—अन्यथेत्यादिक-मुक्तमिति । निर्मीयत इति निर्माणशब्दव्युत्पत्तिः । अथ वा निर्मीयते-ऽनेनेति व्युत्पत्त्या सत्त्वसामान्यं कारणं यस्येति बहुव्रीहिः । एवं गकारौकारविसर्जनीयात्मकं विवर्तरूपमेव कारणं स्यात् न शब्दत्व-मित्युक्तम् । शब्दत्वस्य विवर्तद्वारा कारणत्वेऽनुसंहारबुद्धिप्रतीक्षणेऽपि न कारणं स्यादित्याह— अपि च शब्दत्वं ....... अर्थप्रत्ययप्रसङ्गः ॥ इतिरुभयत्रापि हेतौ । तच्छब्देन पूर्वप्रत्ययपरामर्शः । केचित्तु— शब्द-त्वस्य समुद्रघोषादौ व्यभिचाराद्वर्णत्वमेवाभिधेयधीहेतुभावं भजत इत्याहुः । तान्प्रत्याह— एतेन वर्णत्वमपि ...... वेदितव्यम् ॥ तत्रापि साम्यं शब्दत्वोक्तस्य कृत्स्नस्य प्रसङ्गस्येति भावः । एवञ्च सति

---

१. 'हेतुत्वात्' इति मु. पु. पाठः ।

२. 'कार्यसामान्यजातं' इति मु. पु. पाठः । 'सामान्येति ३ पु. नास्ति' इति टिप्पणी ।

३. 'हेतुभावेन वेदितव्यम्' इति मु. पु. पाठः ।

तदिह कृतं कृतधियामप्रामाणिकेन शब्दत्वसामान्यनिराकरणेन । न च शब्दत्वमेकं वस्तु सत् गकारादिनानात्वभाविकत्वविरोधि, येन *तद्भाविकत्वाय शब्दत्वमपाक्रियते । शाबलेयादिभेदव्यवस्थापनाय गोत्वादिनोऽपि सामान्यस्यापाकरणप्रसङ्गात् । [1]शाबलेयादिषु भिन्नेषु गौरित्येकावभासादशक्यापह्नवमिति चेत्—न । इहापि

---

यत्प्राभाकरैर्वर्णानां वाचकत्वं साधयितुं शब्दत्वसामान्यनिराकरणं कृतं तस्मिन्सति तदेव वाचकं स्यादिति मन्यमानैः, तदपि मुधैवेत्याह—तदिह कृतं ......... निराकरणेन[2] ॥ तस्मिन्सत्यप्युक्तेन क्रमेण वर्णानामेव वाचकत्वात् । अपि च निष्प्रमाणकमेव तन्निराकरणमित्यर्थः । निष्प्रमाणकत्वमेव स्फोरयति—न च शब्दत्वमेकं ...... ......... विरोधि ॥ गकारादीनां नानात्वस्य यद्भाविकत्वं पारमार्थिकत्वं तस्य विरोधीति विग्रहः । विरोधित्वेन किमनिष्टं प्रसज्यते, तदाह—येन तद्भाविकत्वाय शब्दत्वमपाक्रियते ॥ इदमाकूतम्—एकत्वनानात्वयोरेकत्रासमवायादन्यतरत्पारमार्थिकमन्यतरन्मिथ्येत्यापतति । तत्र च 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वम्' इति न्यायेन शब्दत्वस्यैकस्य हानेन भूयांसो गकारादयोऽनुगृह्यन्त इति । तच्छब्देन गकारादिनानात्वं परामृश्यते न विरोधीत्यत्र कारणमाह—शाबलेयादिभेद......प्रसङ्गात् ॥ हेतुसाम्यादिति भावः । परस्तु वैषम्यमाशङ्कते—शाबलेयादिषु ...... अशक्यापह्नवमिति चेत् ॥ गोत्वादिसामान्यमिति सिद्ध्यति । परिहरति—नेति ॥ कारणमाह—इहापि ......... समानत्वात् ॥

---

* (भाविकत्वाय)—'गत्वादेर्वस्तुत्वसिद्धये'।

१. 'शाबलेयादिभेदेषु गौर्गौरित्येकाकारावभासादशक्यापह्नवं तदिति चेत्' इति मु. पु. पाठः ।

२. 'निराकरणेन' इत्यतः परं 'तावदलम्' इत्यधिकं दृश्यते व्याख्यानमातृकायाम् ।

समानत्वात् । नो खल्वक्षु व्यञ्जनेषु च शब्दः शब्द इत्येकनिर्भासनमतिः नाविरस्ति लौकिकपरीक्षकाणाम् । न चैषा श्रोत्रग्रहणोपाधिर्विनापि शब्दत्वमिति साम्प्रतम् । तद्ग्रहणानामपि नानात्वेनैकप्रत्ययसमुत्पादासामर्थ्यात् ।

---

एतमेव दर्शयति—नो खल्वक्षु ...... लौकिकपरीक्षकाणाम् ॥ इहान्यथासिद्धिचोद्यवादिनोऽभिप्रेतं निराकरोति—न चैषा ...... इति साम्प्रतम् ॥

अत्रेयमाशङ्का—किं पुनरिदं शब्दत्वं नाम ? ननु नेदमपि श्रोत्रग्राह्यत्वादन्यदुपलभ्यते । न हि गकारादिष्वेकवर्णग्रहणे वर्णान्तरावमर्शो भवति पाचकादिष्विव । तस्मात्क्रियानिबन्धनैवेयं शब्दशब्दवाच्यता । यथोक्तं—'श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः' इति । यत्र त्वेकत्र पदार्थेऽनुभूयमाने पूर्वदर्शनसम्बन्ध्यवमर्शो भवति तत्र सामान्यमिष्यते । यथा शाबलेयमुपलब्धवतो बाहुलेयं पश्यतः पूर्वाकारावमर्शः । एकशब्दवाच्यता त्वेकनिमित्ता न पुनरेकताकृता । न ह्येकसामान्यशब्दवाच्यतया गोत्वादिसामान्यानामितरेतरानुप्रवेशः । यथा च गोत्वेऽप्येकाकारबुद्धिजननोपाधिको भिन्नेष्वप्येकसामान्यशब्दप्रयोगः एवमत्रापि एकेन्द्रियग्रहणोपाधिको नानात्मस्वेव गकारादिष्वेकशब्दशब्दप्रयोगो नो(ग उ)पपद्यत इति । एषा मतिः । श्रोत्रग्रहणमुपाधिर्यस्या इति बहुव्रीहिः । एष इति पुल्लिङ्गपाठे अवभास इति विशेष्यं द्रष्टव्यम् । शब्दशब्द इति वा । न चेति साम्प्रतमित्यन्वयः । कारणमाह—तद्ग्रहणानामपि ... सामर्थ्यात् ॥ वर्णवदेव ग्रहणानामपीत्यर्थः । ननु 'श्रोत्रग्रहणे' इत्यत्र भाष्ये तद्योग्यता विवक्षिता । यथोक्तशब्दपदानुवृत्तिस्तु श्रोत्रोत्थधीक्रियोपलक्षितयोग्यतात एवेत्यस्तु । निबन्धनेऽपि तद्ग्रहणशब्देन योग्यते विवक्षिते

---

१. 'नो खल्वपि' इति मु. पु. पाठः । 'अक्ष्विति ३ पु. पाठः' इति टिप्पणी ।

२. 'एकनिर्भासः प्रकाशो नास्ति' इति मु. पु. पाठः ।

३. 'विनापि शब्दत्वमेकमिति साम्प्रतम्' इति मु. पु. पाठः ।

इत्यदोषः । तथा च श्रोत्रग्रहणयोग्यतात्मकमेकमिह निमित्तं नास्तीति कथमेकशब्दानुवृत्तिरेकप्रत्ययजनकत्वं वेत्यर्थः ॥

ननु

'श्रोत्रधीलक्षिता वर्णाः पञ्चाशदिति गोचराः ।
व्यक्तयश्शब्दशब्दस्य न सामान्यमबोधनात् ॥'

इति स्थितिः । यथोक्तयोग्यता तु केषाञ्चिदेव तद्धीवेद्यत्वदर्शनात् स्थितेति तद्ग्राह्यवर्णानामानन्त्याभावात्पृथक्पृथगेव योग्यतामवधार्य तदनुसन्धानपूर्वकः शब्दप्रयोगो नानुपपन्न इत्यर्थः । हन्त! एवं बहूनां निमित्तत्वाश्रयणमेव दोष इति ॥

ननु जातिवादिनोऽपि तुल्योऽयं दोषः । यथोक्तशब्दत्वजातिमनुजानतापि केचिदेव जात्यन्वयिनो वाच्या इति । जात्युपगमेऽपि तत्समवायप्रयोजकत्वेन तदाश्रयणं दुर्वारमिति तुल्यत्वान्न दोष इत्यर्थः। पुनश्च, ननु तत्समवायप्रयोजकत्वेऽपि जातिवादिनो न तज्ज्ञानापेक्षा । शब्दप्रयोगनिमित्ततोपगमे तदपेक्षेति विशेष इत्याशङ्क्योक्तम्—ननु जातियोगः केषामिति पृष्टो जात्युपलक्षणेनैव प्रतिवक्तीति युक्तमिति । जात्युपगमेऽपि गवादिवत्सर्ववर्णानुवृत्ततया स्फुटदृष्ट्यभावाच्छब्दप्रवृत्त्युन्नेयतया तद्व्युत्पत्तिः प्रत्येकप्रयोगमूलैवोपेयेति साम्यमित्यर्थ इति। अतस्तद्ग्रहणानां नानात्वेनेत्ययुक्तमिति ॥

अत्र ब्रूमः—युक्तमेवोक्तं, उक्तं हि बहूनां निमित्तताश्रयणमेव दोष इति । यथाहुः—'अन्यायश्चानेकार्थत्वम्' इति । सत्यं स्वारसिकी स्थितिरेषा । अगत्या त्वर्थादिवदनेकार्थत्वमप्यङ्गीक्रियमाणं न दोषमावहति । इह च गतिर्नास्त्येव । यथोक्तं—ककारगकारादावेकधीविरहाच्छब्दत्वजातिरप्ययुक्तेति चेत्, तन्न । असिद्धत्वात् । तथा हि—यत्तावदुक्तं पूर्वककारावमर्शो गकारादिषु नास्तीति; तत्केनाभिप्रायेण ? अस्ति हि तत्रापि व्यावृत्तमनुगतं च रूपं तद्यदि गकारादीनामितरेतरव्यावृत्तः आत्मा नान्यत्र प्रतिसन्धीयत इत्युच्यते तदिष्यत एव । न हि गवादिष्वपि व्यावृत्तात्मप्रतिसन्धानमस्ति । यथा तु तत्र

स गवायमित्यनुगतं रूपमाभासते एवमिहापि भावान्तरेभ्यो व्यावृत्तमनुगतं च गकारादिपु रूपमुपलभमाना न सामान्यान्तरवच्छब्दत्वसामान्यापह्नवं कर्तुमुत्सहामहे । एतच्च नो खल्विति पूर्वमेवोक्तम् । तस्मात्ककारगकारादावेकधीविरहादित्यस्य कोऽभिप्राय: ? अनुवृत्तस्य व्यावृत्तरूपत्वभानाभावादिति ॥ यथोक्तं—

'भेदोत्थप्रतिभासेऽस्ति यद्येकाकारबोधनम् ।
तत्र जातिरुपेता स्यान्नैकशब्दप्रयोगत: ॥' इति ।

तदयुक्तम् । असिद्धे:; गकारादिष्वपि गोशब्दो गकारौकारविसर्जनीयाश्शब्द इति तादात्म्यबोधादुपदेशाच्च । तथाहि—प्रत्येकमकारादिष्वयं शब्दोऽयं शब्द इति समानाधिकरणबोधो दृश्यत इत्यसिद्धं व्यावृत्तरूपत्वाभानमित्यनुसन्धेयम् । यथोक्तं—

'इदङ्कवोरपर्यायसामानाधिकरण्यत: ।
मिथस्तदर्थयोर्वाच्यो भेदाभेदसमुच्चय: ॥' इति ।

तस्मात्प्रत्यक्षसिद्धत्वाद्गकारादिष्वनुवृत्ताकारस्य शब्दशब्दस्यापि तन्निमित्तत्वोपपत्तौ तस्य निमित्तान्तरकल्पनायां नावकाश इत्यत: स्थितं बहूनां निमित्तत्वाश्रयणमेव दोष इति । ननूक्तं जात्युपगमेऽपि तत्समवायप्रयोजकत्वेन तदाश्रयणमिति । सत्यमुक्तम्; अयुक्तन्तु तत्, समवायस्यैवाभावात् दूरे तत्प्रश्नप्रतिवचने इति । यथा च समवायस्यैवाभाव: तथा वार्तिककारेण वार्तिककारीयैश्च पराक्रान्तम् । अस्माभिश्च विभ्रमविवेकव्याख्यायां तदुक्तसंक्षेपो दर्शित इति न प्रक्रम्यते । किञ्च, गोत्वादिष्वपि जातियोग: केषामिति पृष्टे येन प्रकारेणोत्तरं दीयते तेनैवात्रापि । यदि ह्येवमेव तत्रापि, तर्हि तवानेकनिमित्तता सर्वजातिसमाना कुतो हेतोरत्र दूषणतयोपन्यस्तव्या । अथोच्येत गवादौ जात्युपलक्षणेनैव प्रतिवक्तीति युक्तम् । गोत्वादेर्निजव्यक्त्यनुवृत्ततया स्फुटदर्शनात् । इह तु सर्ववर्णानुवृत्ततया स्फुटदृष्ट्यभावाच्छब्दप्रवृत्त्युन्नेयतया तद्व्युत्पत्ति: प्रत्येकप्रयोगमूलैवोपेयेति

**श्रोत्रस्य चात्यन्तपरोक्षतया तत्प्रतीतेरग्रहे शब्दः शब्द इत्येकावभासप्रकाशानुपपत्तेः । अगृहीतस्योपाधेरुपहित-**

विशेष इति । अत्र ब्रूमः—अयमपि विशेषो नास्ति । यतो गोत्वादिवच्छब्दत्वेऽपि स्फुटमेव दर्शनमिति । यथोक्तम्—

'अल्पीयसापि यत्नेन शब्दमुच्चरितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥' इति ।

अतस्सूक्तं **तद्ग्रहणानामपीति** । हेत्वन्तरमाह—**श्रोत्रस्य चात्यन्तपरोक्षतया ...... प्रकाशानुपपत्तेः** ॥ इदमाकूतम्—अस्ति तावच्छब्दः शब्द इत्यपरोक्षावभास इत्युक्तम् । अस्य च तावदपरोक्षो विषय इत्यङ्गीकरणीयम् । स च श्रोत्रग्राह्यता चेत्कथं श्रोत्रस्य नित्यानुमेयत्वे तद्ग्रहणं तद्ग्राह्यता वाऽपरोक्षज्ञानविषयतामश्नुवीत । न च ग्रहणं तद्योग्यता (वा) प्रत्यक्षं, ग्रहणस्यानुमेयत्वात् स्वयंप्रकाशत्वाद्वा । योग्यतायाश्च शक्त्यात्मकत्वेनार्थापत्तिप्रमेयत्वात् । न च प्राकट्यं त्वयाभ्युपगम्यते, येन तदेव विषय इत्युच्येतेति । कुतः पुनस्तद्गृहीतेरग्रहे तादृक्प्रत्ययानुपपत्तिरित आह—**अगृहीतस्योपाधेरुपहितप्रत्ययाधानासहत्वात्** ॥ न हि रागमनवगम्य रक्तता ज्ञातुं शक्यत इति भावः । बुद्धेरप्यपलापे उपेक्षैवोत्तरमिति वेदितव्यम् ॥

प्रामाणिकाश्चाहुः—'श्रोत्रग्राह्यतापि च शब्दत्वगुणत्ववर्णत्वातिव्यापिनी न शब्दत्वलक्षणम् । तथा हि—न शब्दत्वसमवायिनः सत्त्वादयो न श्रोत्रावसेयाः । न च श्रोत्रेणैवेत्यवधारणं, वर्णानां मनसाप्यवधारणात् । वर्णत्वे च प्रसङ्गानतिवृत्तेः । न च सत्त्ववर्णत्वाद्यपह्नवः साधुः, सर्वसामान्यापह्नवापातात् । न हि सामान्यविशेषान्तरपरिकल्पनेपि निबन्धनमस्त्यन्यत् अतोऽनुवृत्तव्यावृत्ताव-

१. 'श्रोत्रग्राह्यत्वोपाधेश्च' इति मु. पु. पाठः । 'श्रोत्रस्य चेति ३ पु. पाठः इति टिप्पणी ॥

२. 'तद्गृहीतिविरहे शब्दः शब्द इत्येकनिर्भासप्रकाशानुपपत्तेः' इति मु. पु. पाठः ।

प्रत्ययाधानासंहत्वात् । न च गकारादिष्वनुस्यूतमश्वादि-पदव्यावृत्तमेकैकवर्णावगाहिनीषु प्रख्यासु तिरोहितमिव प्रथते । [2]किं न प्रथते यदा विशदपदावभासिनि गौरित्येकं पदमिति चरमे चेतसि चकास्ति पूर्वोपलभ्यभागप्रति-सन्धानवतीति । न चास्यैते भागा इत्यायुष्मतैवोपपादितम् । अतस्तद्विवर्ताः ॥

भासिनः प्रख्यानात्' इति । ननु सम्प्लवत एव । न खल्वेता गादिबुद्धयो गकारादिमात्रनिर्भासाः, किन्तर्हि गकाराद्याकारं किञ्चिदनाकारं आसु सम्प्लवते । न च तच्छब्दत्वमेव, उक्तदोषात् । अपि तर्हि स्फोटात्मैव । स च न शब्दत्ववत्सर्वसाधारणः । अश्वादिभ्यो व्यावृत्तो गकारादि-ष्वेवानुवृत्त इति मुखस्येव मणिकृपाणदर्पणादिषु । तस्य विवर्ता गकारादय इत्युपपन्नमित्यत्राह—**न च गकारादिषु …… प्रथते** ॥ न प्रथते इत्येतदसहमानश्चोदयति—**किं न प्रथते यथा …चकास्ति** ॥ पूर्वोपलभ्यभागप्रतिसन्धानवति यदेवं भूते ज्ञाने चकास्ति तदा किं न प्रथत इति योजना । **तिरोहितमिवे**त्यस्य संवादाय **विशदपदाव-भासिनी**त्युक्तम् । गकारादिष्वनुस्यूतमिति दर्शयतोक्तं—**पूर्वोपलभ्य-भागप्रतिसन्धानवतीति** ॥ वर्णसमूहमात्रावलम्बनाय पदप्रख्येति चेत्तत्राह—**न चास्यैते भागा इत्यायुष्मतैवोपपादितम्** ॥ इद-माकूतम्—उक्तं हि—**'तस्मात् स्वसिद्धान्तव्यामोहमपदायाभ्युपेयता-मनुसंहारबुद्धेरेकपदवाक्यगोचरता'** इति । न च स्फोटात्मनो भागा वर्णा इति साम्प्रतम् । 'न तावत्पूर्वः कल्पः ; अवयविन्यूनपरिमाणत्वा-दवयवानाम्' इत्यादिना भवतैव साधितत्वादिति । एवन्तर्हि वर्णोपराग-वती पदप्रख्या किन्निबन्धनेति चेत्तत्राह—**अतस्तद्विवर्ताः** ॥ वर्णा इत्यधिकारात्सिद्ध्यति । एवञ्च 'गकारादिष्वनुस्यूतमश्वादिपदव्यावृत्त-

१. 'प्रत्ययाधानासामर्थ्यात्' इति मु. पु. पाठ. ।

२. 'कथं न प्रथते यदा विशदपदावगाहिनि गौरित्येकं पदमिति चरमे चेतसि पूर्वोपलभ्यभागप्रतिसन्धानमस्ति' इति मु. पु. पाठः ।

तथा च तदेव तेन तेनापरमार्थसता गकारा-द्याकारेण प्रतिभासत इति प्रमाणमार्गागतम् ॥

तत्किमिदानीमनुसंहारबुद्धिप्रतिसन्धानापेक्षाः प्राञ्चः प्रत्यया यथास्वं गकाराद्यनुविद्धमेकमवभासयन्ति ? ओमिति चेत्—न[1]। तत्र तत्र चरमविज्ञानसमये प्राचां प्रत्ययाना-मतिवृत्तत्वा*त्तत्काले चरमस्य चेतसोऽनुवृत्तत्वादुपकुर्वन्त्य-

---

मेकैकवर्णावगाहिनीषु प्रख्यासु तिरोहितमिव प्रथते' इत्येतत्सिद्धमित्याह **तथा च तदेव ...... प्रमाणमार्गागतम्** ॥ प्रमाणमार्गेणागतमिति विग्रहः । नान्या गतिरस्तीति भावः । एष च पूर्वोक्तसङ्क्षेप इति द्रष्टव्यम् ॥

अत्र परिहाराय प्रक्रम्यते। ननु '**यदा विशदपदावभासिनी**'त्यत्र चरमस्य चेतसो भवतां प्राक्प्रत्ययेष्वेकानुव्याधं प्रति कारणत्वमभिमतं, ज्ञापकत्वं वा ; कारणत्वञ्चोपकार्यत्वं अभिमतं, उपकारकत्वं वा । तत्रोपकारकत्वमुत्थापयन्नाह—**तत्किमिदानीं ......... अवभास-यन्ति** ॥ अनुसंहारबुद्धिं प्रतिसन्धायाभिवीक्ष्येत्यर्थः । एतदेवाङ्गी-कारयन्नाह—**ओमिति चेत्** ॥ दूषयति—**नेति** ॥ कारणमाह—**तत्र तत्र ...... बतापतितम्** ॥ यदि स्वकाले सतां प्राचां प्रत्ययानामुप-कार्यत्वं तदा चरमस्य चेतसोऽनागतत्वेनासत्त्वादसन्तः पदार्था उपकुर्वन्तीत्यङ्गीकृतम् । अथ स्वकाले सदेव चरमं चेत उपकरोति तदा प्राचां प्रत्ययानामतिवृत्तत्वादसतोऽपि वस्तुन उपकार्यत्वमस्ती-त्यङ्गीकर्तव्यमिति कष्टमस्यापन्नमिति । अत्रैव दूषणान्तरमाह—

---

१. 'ओमिति चेत् हन्त तत्र तत्र' इति मु. पु. पाठः ।

* (तत्काले)—'आद्यवर्णज्ञानकाले । चरमनादाभिव्यञ्जनीयस्य स्फोटस्याद्य वर्ण-प्रत्यक्षकालेऽसत्त्वादसत उपकार्यत्वं चरमवर्णकाले चाद्यानां नाशादसत उपकारकत्वं चापद्यत इत्यर्थः ।' इति टिप्पणी ॥

२. 'अनागतत्वादुपकरोति असतामसन्निति चैवमापतितम्' इति मु. पु. पाठः।

सन्तो वा सतोऽसतो वेति बतापतितम् । अपि च जन्ममात्रव्यापारत्वेन विज्ञानस्य [1]जातस्य जन्माभावेन विरम्यव्यापारायोगः, तद्विपरीतं *चाभ्युपेतम्[2] ॥

†अनपेक्षाश्च प्राञ्चः प्रत्ययाः स्तम्भकुम्भाम्भोरुहाद्यवगाहिन इवाभिन्नानुव्याधविरहिताः[3] स्वानुभवाद्भासमानाः

---

**अपि च जन्ममात्रव्यापारत्वेन......विरम्य व्यापारायोगः** ॥ ततः किमित्याह—**तद्विपरीतं चाप्युपेतम्** ॥ परमार्थतः सतामेवोपकार्यत्वादसतश्च तदभावात्सत एव वोपकारकत्वाच्चरमज्ञानसमये विरतव्यापाराणामपि प्राचामुपकारग्रहणाय पुनर्व्यापारोऽस्तीत्यभ्युपगन्तव्यत्वात् । तस्य विरम्यव्यापाराभावस्य विपरीतं वैपरीत्यं वस्तु वोऽभ्युपेतमेवेत्यक्षरम् (रार्थः) । अथ वा 'तद्विपरीत'मिति पदद्वयम् । तच्छब्देनायोगस्य सामान्यविवक्षया निर्देशः । अस्मिन्नेव कल्पे दूषणान्तरमाह—**अनपेक्षाश्च ...... सम्भिन्दन्ति** ॥ परमार्थतोऽनुसंहारबुद्धिप्रतिसन्धानानपेक्षा इत्यर्थः । **न परस्परं सम्भिन्दन्ति** मेलयन्तीति । एतच्च सर्वं स्वसंवेद्यमित्युक्तम् । **स्वानुभवाद्भासमाना** इति । चरमस्य चेतसः उपकार्यत्वमप्यनेनैव निराकार्यमिति । तत्रापि व्याख्यायते—**अनुसंहारबुद्धिप्रतिसन्धानापेक्षा** इति । अनुसंहारबुद्धौ निजविषयाणां वर्णानां प्रतिसन्धानं तदपेक्षमाणाः कामयमाना इत्यर्थः । **यथास्वं ये गकारादयः तैरनुविद्धमेकं** पदतत्त्वं प्रत्येकमवभासयन्तीति । अनुसंहार्याभावेऽनुसंहाराभावादिति भावः । अत्र **चोपकुर्वन्त्यसन्तो**

---

१. 'ज्ञातस्य' इति ३ पु. पाठ इति टिप्पणी ॥

* (अभ्युपेतं)—'ज्ञानानामुत्पत्त्यैवार्थप्रकाशकत्वात्तृतीयक्षणे नाशाच्च प्रथमवर्णज्ञानस्यास्फुटपदत्वाभिव्यञ्जकत्वं चरमवर्णज्ञानसान्निध्येन तस्यैव स्फुटाभिव्यञ्जकत्वमिति न युक्तमिति भावः ।' इति टिप्पणी ॥

२. 'स्यात्' इत्यधिकं दृश्यते मु. पुस्तके ।

† (अनपेक्षाः)—'अनुसंहारबुद्धिप्रतिसन्धाननिरपेक्षाः । समुदायबुद्ध्यसहकृता इति यावत् ।' इति टिप्पणी ॥

३. 'विरहिणः' इति मु. पु. पाठः ।

न परस्परं स्वगोचरं *सं¹भिन्दन्ति । नाप्यननुभाविकः प्रत्ययेष्वेकानुव्याधः शक्यानुमानः, नरविषाणवदनुपलब्धिविरोधात् ॥

वा सतो वेत्यत्र यथाक्रमं हेत्वोरन्वयः । अपि चेत्यादिकञ्च समञ्जसम् । जन्ममात्रव्यापारत्वेनेति । यथोक्तं—

'तेन जन्मैव विषयं(?) बुद्धेर्व्यापार इष्यते ।' इति ।

जातस्य जन्माभावेनेति । जननानन्तरमस्तित्वान्वयात्सतश्चासत्वेनोत्पत्तिप्राक्कालीने सम्बन्धाभावादिति । अथ वा—जनिक्रियायाः स्वफलस्य तस्मिन्ननाधेयत्वेन तत्रासमवायादिति । अनपेक्षाश्चेति । अनुसंहारबुद्धौ प्रतिसन्धानमकामयमाना इत्यर्थः । ज्ञापकत्वमपि पराणुदन्नाह—नाप्यननुभाविकः ...... अनुपलब्धिविरोधात् इति ॥ यदा विशदपदावभासिनीत्येवं वदता किमनुसंहारबुद्धिप्रतिसन्धानापेक्षास्तेन मिश्रीभूयैकमवभासयन्तीत्यङ्गीक्रियते आहोस्विदनपेक्षाः पृथगवस्थित्येति विकल्पः; यथास्वं गकाराद्यनुविद्धमेकमवभासयन्ति । यदानुसंहारबुद्धिरेकमवभासयति तदा स्वगोचरैर्भावैः तं विशिष्टतया बोधयन्तीत्यर्थः । द्वितीयं शिरो दूषयति—अनपेक्षाश्चेति ॥ पृथगेव स्थिता इत्यर्थः ॥

ननु पृथगेव प्राञ्चः प्रत्यया यथास्वं गकाराद्यनुविद्धपदतत्त्वमवभासयन्ति अनुसंहारबुद्धौ गकाराद्यनुविद्धपदावभासनात् यथा धवखदिराशोकचम्पका वृक्षा इति पश्चादनुसंहारबुद्धिर्धवोऽयं खदिरोऽयं इत्यादिधवादिविशिष्टवृक्षावगमपूर्विकेति ; तत्राह—नापीति ॥ अनुपलब्धिविरोधश्च मीमांसकमते पक्षदूषणं, नैयायिकमते कालात्ययापदिष्टाख्यो हेत्वाभास इति । दूषणान्तरानुपन्यासस्तु निष्फलत्वात् । न ह्यनुसंहारबुद्धीनामपि चम्पकाशोकपुन्नागा वनमित्यत्र चम्पकानुविद्धवनविषयत्वमिति व्यभिचार इति ॥

* (न भिन्दन्ति)—'न व्यावर्तयन्ति । तथा च गोगवयगोतादिप्रत्ययेष्वाद्यप्रत्ययैरस्फुटत्वेनेष्टा अपि परस्परव्यावृत्तरूपगवादिपदस्फोटाभिव्यक्त्योऽनुपपन्ना इति भावः ।' इति टिप्पणी ॥

१. 'भिन्दन्ति' इति मु. पु. पाठः ।

तथा च परस्परव्यावृत्तवर्णमात्रगोचरा अनुभूतयो भावनोपजननद्वारा नाना वा एकं वा स्मृतिप्रत्ययं स्वगोचर एवादिध(वाधि)त्सन्ति, नान्यगोचरं नाप्यगोचर इत्य*नुसंहारबुद्धिरपि परस्परव्यावृत्तवर्णमात्र(र्णत्रि)तयावगाहिनी, न तु वर्णानुव्याधवदेकपदगोचरेत्यनुभवमार्गायातम्[1] । कथमायातम्? यथा—गौरित्येकमिदं पदमित्येकपदावभासिनी[2]

एवन्तावत्पूर्वबुद्धीनां निरूपणम् । सम्प्रत्युत्तरबुद्धीनां निरूपणमुपक्रमते—**तथा च परस्परव्यावृत्त ........ अनुभवमार्गायातम्** ॥ **वर्णमात्रे**ति पदतत्त्वस्यैकस्यानुस्यूतिं व्यवच्छिनत्ति । **भावनोपजननद्वारा** न तु साक्षादेव पूर्ववदनुसंहारबुद्धिप्रतिसन्धानापेक्षेति । **नाना वा एकं वे**ति । तत्र तत्रानपेक्षाणां कारणत्वेऽपि मिलितानामपीत्युक्तत्वात् । **स्मृतिप्रत्ययम्** । नानुभवमिति । **स्वगोचर एवे**त्युक्त्वा(क्त्या) स्वपदव्यावर्त्यं **नान्ये**ति, गोचरपदव्यावर्त्त्यं **नापी**ति दर्शितवानित्यनुसन्धेयम् । **अनुसंहारबुद्धिरपी**त्यपिशब्देन पूर्वबुद्धिवदिति दर्शयति । **परस्परव्यावृत्ते**त्यस्य **वर्णानुव्याधा**दिति, **वर्ण(त्रि)तये**त्यस्यैकपदेति व्यावर्त्त्यमित्यपि द्रष्टव्यम् । **अनुभवमार्गायातम्**—अनुभवमार्गादायातम् । एवमुत्तरबुद्धिनिरूपणेऽपि वर्णा एव पदमित्युक्तम् । तदेतदसहमानश्चोदयति—**कथमायातम्? यथा .... तेषां नानात्वात्** ॥ यथा(दा) धीरस्ति तदा कथं ह्यनुभवमार्गायातमिति योजना । न चेयमनालम्बना, विज्ञानवादे सालम्बनत्वस्य स्थितत्वात् । **नानात्वात्**—एकविषयबुद्धिग्राह्यत्वायोगात् । एकत्वनानात्वयोर्विरोधादिति भावः । तदुक्तं—'कथं प्रत्यक्षवेद्यता स्फोटात्मनः? वर्णविज्ञानविलक्षणस्य पश्चाद्गौरिति विज्ञानस्य[3] निरालम्बनत्वायोगात् । न ताव(त)द्वर्णालम्बनम्, तद्बुद्धिविलक्षणत्वात् । तस्मादर्थान्तरमेवालम्बितुमर्हति ।

* (अनुसंहारबुद्धिरपि)—'समुदायात्मकपदस्वरूपज्ञानमपि' इति टिप्पणी ।

१. 'व्यावृत्तवर्णरूपावगाहिनी एकगोचरेत्यनुभवमार्गागतम्' इति मु. पु. पाठः ।

२. 'कथं गौरित्येकं पदमित्येकपदावभासिनी' इति मु. पु. पाठः ।

३. 'वर्णविज्ञानाविलक्षणस्य पश्चाद्गौरिति विलक्षणस्य विज्ञानस्य' इति मातृकाग्रन्थपाठः ।

धीरस्ति लौकिकपरीक्षकाणाम् । न चेयमनालम्बना, नापि वर्णालम्बना; तेषां नानात्वात् । न च सेनावनवत्[1] औपाधिकी । उपाधिः खल्वेकविज्ञानविषयता वा भवेदेकाभिधेयप्रत्ययहेतुता वा । न तावत्पूर्वः पक्षः । [2]अप्रती-

ननु अस्तीदं पश्चादेकैकवर्णविज्ञानविलक्षणविज्ञानं, न तु तदर्थान्तरावलम्बनम् । वर्णरूपानुविद्धत्वाद्रूपान्तरा(न)वभासनाच्च । तथा हि—त एव वर्णात्मानः पुरः परिगतपरिच्छेदाः तत्राप्यवभासन्ते न तु रूपान्तरम् । अर्थान्तरविषयत्वे तु यथा वर्णविज्ञानानि परस्परविषयरूपप्रत्यवमर्शशून्यानि प्रकाशमानरूपान्तराणि प्रकाशन्ते तथेदमपि स्यात् । वैलक्षण्यन्तु पूर्वोपलब्धीनामेकैकवर्णगोचरत्वादस्य च समुच्चितविषयत्वादिति नार्थान्तरविषयत्वं वैलक्षण्यमात्रात्सिद्ध्यति । यदि चैकैकस्मात्रयमर्थान्तरम्, अस्तु प्रत्ययस्य विषयः न तु तदतिरिक्तः कश्चिच्छब्दार्थः(ब्दात्मा), वर्णपरित्यागेन बुद्धावप्रतिभासनात् । अथ मतं—गौरित्येकं विज्ञानं; को वाह्यन्यथा? ज्ञेयन्तु नैकम् । ज्ञेये तु तद्ग्राह्यतयैकार्थकारितया वैकत्वभ्रमः एकत्वोपचारो वा वनादिवत्' (इति) । अत्राह—**न च सेनावनवदौपाधिकी** ॥ अयमर्थः । यथा खलु भिन्नेष्वेव हस्त्यश्वरथपादातेष्वेककार्यकारितया सेनेयमेकेति, यथा वा धवखदिरादिषु नानाभूतेषु वनमिदमेकमिति धीरौपाधिकी, नैवमेकमिदं पदमिति धीरौपाधिकी । वनेऽपि, 'यद्वैककार्यहेतुत्वादेकं गोशब्दवद्वनम्' इत्यादावुक्त उपाधिरनुसन्धातव्यः । उपाध्य(सं)भवादिति भावः । प्रत्येकासम्भवप्रतिपादनायोपाधिं विकल्पयति—**उपाधिः खलु ...... प्रत्ययहेतुता वा** ॥ भवेदिति सम्बद्ध्यते । तत्राद्यं शिरो दूषयति—**न तावत्पूर्वः कल्पः** ॥ कारणमाह—**अप्रतीतोपा(*धेः उपहितप्रत्ययायोगात्)** . . . . . . . . . . . . . . . . . .

१. 'नापि सेनावनादिवत्' इति मु. पु. पाठः ।

२. 'अप्रतीतोपाधेः' इत्यारभ्य 'किन्तु व्यपदेशमात्रम्' इति पर्यन्तं मुद्रितपुस्तकपाठो दीयते । व्याख्याने ग्रन्थपातात् ।

* अत्र मातृकाग्रन्थे पत्रचतुष्कपरिमितग्रन्थपातः ।

तोपाधेरुपहितप्रत्ययायोगात् । स्वसंवेदनं संवेदनमनिच्छता-मनुसंहारबुद्ध्या *स्वरूपाग्रहणात्तदेकत्वाग्रहात्तदुपाध्येकपद-प्रतिभासानुपपत्तिः । उत्तरस्मिन्नपि पक्षे परस्पराश्रयप्रसक्ति-र्दुर्वारा । न खल्वविदितपदरूपावधिरर्थमवैति । अवध्य-न्तरपरिग्रहे तत्त्वेऽपि वर्णानां †तदर्थभेदानध्यवसायात् । तत्रार्थप्रतिपत्त्या पदरूपविशेषमुपकल्पयतो दुरुत्तरमितरे-तराश्रयं प्रसज्येत । न चैकार्थसम्बन्धाख्यानमेकपदत्व-मापादयति । वर्णानामनाश्रितपदरूपाणामप्रत्यायकत्वेना-सम्बद्धानां ‡सम्बद्धाख्यानानुपपत्तेः । सम्बन्धाख्यानात्तु पदभावे तदेवेतरेतराश्रयत्वमापद्यते । पदत्वाद्धि सम्बन्धित्वे सत्याख्यानमाख्यानाच्च पदत्वे सति सम्बन्धितेति । व्यव-स्थितं हि वाचकत्वमाख्यायते । अपि च एकावभासस्य प्रत्ययस्यौपाधिकत्वमिच्छतो न किञ्चिदेकं भवेत् सर्वत्रैव कथञ्चित्कस्यचिदुपाधेः सम्भवात् । तथा च नानापि न स्यात् एकसमाहारात्मकत्वान्नानात्वस्य ॥

अत्र ब्रूमहे—न वयमेकावभासप्रत्ययमेकवस्तु-व्यवस्थितौ प्रमाणयामः; किन्तु व्यपदेशमात्रम् । भवति

---

नाद्रियामहे इत्येतदेव व्याचष्टे—भवति हि ...... लौकिकानां

---

* (स्वरूपाग्रहणात्)—'ज्ञानेन स्वस्याविषयीकरणात्तस्यानुव्यवसायग्राह्यत्वात् ज्ञाततालिङ्गानुमेयत्वाद्वेति भावः ।' इति टिप्पणी ।

† (तदर्थभेदानध्यवसायात्)—'पदत्वमनपेक्ष्य समुदायत्वादिधर्मान्तरपुरस्कारेण पदज्ञानेऽपि अर्थानां व्यावृत्तानामनुपस्थितेः । सामान्यतः पदत्वज्ञानेनार्थत्वेनार्थोपस्थितिः स्यादपीति भावः ।' इति टिप्पणी ।

‡ 'असम्बन्धानां सम्बन्धाख्यानानुपपत्तेरिति २ पु. पाठः ।' इति टिप्पणी ।

हि करितुरगरथपदातिषु चम्पकाशोककिंशुकादिषु च नानात्वेऽपि कञ्चिदुपाधिमाश्रित्य व्यपदेशो लौकिकानां सेनेति वनमिति च। [1]न च तत्सेना वनं वा करिचम्पकाद्यनेकसमवाय्येकोऽवयवी प्रसिध्यति । तथैव गकारादयोऽपि पूर्वोपलब्धिविपरिवर्तिनो रूपाद[3]न्यूनाधिकाः [4]एकस्यामेव स्मृतौ प्रथमानाः सत्यपि पदमिति व्यपदेशाभेदे नैकानुव्याधवन्तो भवितुमर्हन्ति । उपाधिविरहात् एकानुव्याधमु[5]पकल्पयति व्यपदेशभेद इति चेत्—न; इतरेतराश्रयापत्तेः। एकानुव्याधवती हि प्रख्या तादृशव्यप-

---

सेनेति वनमिति च ॥ एवं व्यपदेशमात्रमित्येतद्व्याख्यातम् । नाद्रियामहे इत्येतदपि प्रामाणिकं दर्शयन्नाह—न च तत्सेना ........ प्रसिद्ध्यति ॥ तदेकोऽवयवी प्रसिद्ध्यतीत्यन्वयः। तदित्यस्य व्याख्यानं—सेना वनं वेति। एतदेव प्रकृते उपयोजयन्नाह—तथैव गकारादयोऽपि .......भवितुमर्हन्ति ॥ 'तत्किमिदानीमनुसंहारबुद्धी'त्यत्र 'परस्परव्यावृत्तवर्णमात्रगोचरा अनुभूतयः' इत्यन्तस्य 'पूर्वोपलब्धिविपरिवर्तिनो रूपादन्यूनाधिका' इति सङ्ग्रहः । 'भावनोपजननद्वारा' इत्यादेः 'नाप्यगोचरे' इत्यन्तस्य, 'एकस्यां' इत्यादि 'व्यपदेशाभेदे' इत्यन्तं शेषस्य च शेषः सङ्क्षेप इति द्रष्टव्यम्। अत्र चोदयति—उपाधिविरहात् ......इति चेत् ॥ एतच्च 'कथमायातं' इत्यादेश्चोद्यस्य सङ्क्षेपः । परिहरति—नेति ॥ कारणमाह—इतरेतराश्रयापत्तेः ॥ एतदेव व्याचष्टे—एकानुव्याधवती हि प्रख्या ......अन्यो-

---

१. 'करितुरगादिष्वश्वत्थचम्पकाशोकखदिरधवकिंशुकादिषु नानात्वेऽपि कथञ्चिदेकमुपाधिमाश्रित्य सेना वनमिति व्यपदेशमात्रं लौकिकानाम् ।' इति मु. पु. पाठः । 'अश्वत्थेति ३ पु. नास्ति' इति टिप्पणी ।

२. 'न चैतावता सेना वनं वा करिचम्पकाद्यवयवसमवाय्येकमवयवि प्रसिध्यति ।' इति मु. पु. पाठः । ३. 'अन्यूनानधिकाः' इति मु. पु. पाठः ।

४. 'एकस्यां स्मृतौ' इति मु. पु. पाठः ।

५. 'उपकल्पयति व्यपदेश' इति मु. पु. पाठः ।

देशोत्पादिनी, *बुद्धिनिबन्धनत्वाद्व्यपदेशस्य । ततस्तु तामर्थयमानो व्यक्तमन्योन्याश्रयमावहति ॥

न्याश्रयमावहति ॥ इतरेतराश्रयापत्तेरित्यत्राशङ्का, कथं इतरेतराश्रयापत्तेः । न हि व्यपदेशं प्रत्यक्षतो गृहीत्वा तन्मूलभूतामेकानुव्याधवतीं प्रख्यातो(ख्यां ततो)ऽनुमित्सतां अन्योन्याश्रयसम्भव इति, सानेन निवार्येते । मा भूदनुमानमि(मान इ)तरेतराश्रयं, उत्पत्तौ तु भविष्यति । तथा हि—वक्तृणामेव तावदसिद्धा बुद्धिर्न व्यपदेशोत्पादिनी, सिद्धिश्च ज्ञानमेव, स्वयम्प्रकाशत्वाभ्युपगमात् । स्वयम्प्रकाशवादिनो हि ज्ञातैव बुद्धिः स्वकार्यक्षमेति मन्यन्ते । न च पूर्वासु बुद्धिष्वेकानुव्याधोऽस्तीत्युक्तं, अनुपलब्धिनिरस्तत्वात् । ततश्च व्यपदेशादेव बुद्धिसिद्धिः, अन्यस्य प्रकारस्याभावात् । तदपेक्षा च व्यपदेशोत्पत्तिरि(ती)तरेतराश्रयमिति । एतच्च व्यपदेशोत्पादिनीत्यनेन सूचितमिति वेदितव्यम् । अथवा—एकमिदं पदमिति व्यपदेशस्यैकानुव्याधोपकल्पकत्वं केवलस्य वोपाधिविरहसहितस्य वा । उपाधिविरहश्चोपाध्यसम्भवादेकानुव्याधवत्त्वाद्वा । यद्येकानुव्याधवत्त्वादित्युच्यते तत इतरेतराश्रयः । एकानुव्याधवत्त्वज्ञानादुपाधिविरहवद्व्यपदेशोत्पत्तिविज्ञानं, सामान्यतो बुद्धिनिबन्धनत्वाद्व्यपदेशस्य । तद्विशेषस्यापि तद्विशेषनिबन्धनत्वात्तादृशेनोपाधिविरहवद्व्यपदेशाच्च तादृशीं बुद्धिमनुमिमानोऽन्योन्याश्रयमाविशतीति । उपाध्यसम्भवस्तु नास्त्येवेति वक्ष्यते । न च केवलस्याङ्गीकृतम् । उपाधिविरहादित्युक्तत्वात् । न च सम्भवति, सेनावनादौ व्यभिचारादिति । अथवा अन्या व्याख्या—एवं पूर्वासु बुद्धिषु एकानुव्याधवत्त्वं उत्तरबुद्धिगतव्यपदेशादिति कृत्वा व्याख्यातम् । सम्प्रत्युत्तरास्वेव तदनुमीयते इत्यत्र व्याख्यायते । एकस्यामेव स्मृतौ प्रथमाना नैकानुव्याधवन्त इत्युक्तम् । तत्र चोद्यं—व्यपदेशो ह्येकविषयोऽयं भ्रान्तिमूलो वा स्यात्, अभ्रान्तत्वेऽप्यौपाधिको वा स्याद्वनादिवत्, एकानुव्याधवान्वा जात्यादि-

* (बुद्धिनिबन्धनत्वात्)—'बुद्धिनिमित्तत्वादिति ३ पु. पाठः' इति टिप्पणी ।

१. 'व्यक्तमितरेतराश्रयत्वमाविशति' इति मु. पु. पाठः । 'इतरेतराश्रयमिति ३ पु. पाठः' इति टिप्पणी ।

**न चात्रोपाधिविरहोऽपि । अस्ति खल्वेकाभिधेयधीहेतु-(भाव)स्त्रयाणामपि वर्णानामेकस्मरणसमारोहिणां ग्राव्णामिवैकपिठरधारणे, यस्मात् पदमिति व्यपदेशः। न चैवमन्यो-**

---

वत् । तत्र भ्रान्तिमूलत्वं तावन्निर्निबन्धनत्वादनाशङ्कनीयमेव । उपाधिश्च न कश्चिन्निरूप्यत इत्युक्तम् । अतः परिशेषादयं व्यपदेश एव स्वस्मिन्नेकानुव्याधमापादयतीति । उपकल्पयन्तीति बहुवचनदर्शने गकारादय इत्यनुषज्यते । व्यपदेश इतीत्यत्र सप्तम्यन्तपरिच्छेद इति योज्यम् । सर्वथायमेकानुव्याधवान्व्यपदेशो जायत इत्यर्थः । अत्रोत्तरं —बुद्धिनिबन्धनो व्यपदेशभेद इत्यविवादम् । ततश्च गौरित्येकं पदमिति व्यपदेशोत्पत्तिरेकपदानुभवनिबन्धना स्यात्, एकानुभवोत्पत्तिश्च व्यपदेशोत्पत्त्यधीनेतीतरेतराश्रयं स्यात्। व्यक्तमिति। नेतरेतराश्रयप्रकारोऽत्र पृथगेव दर्शयितव्य इति भावः । अथवा—दुरुत्तरमिति भावः । एकानुव्याधवत्त्वं च व्यपदेशस्य कार्यतया वा स्यात् समकालतया वा । सर्वथाऽनुपलब्धिनिरस्तत्वान्नानुमातुं शक्यमिति पूर्वमेवोक्तमिति कृत्वेतरेतराश्रयमात्रमुक्तमिति द्रष्टव्यम् ॥

अथवा—मा भूच्छ्रोत्रप्रत्यक्षेणैकानुव्याधवती प्रख्या व्यपदेश एव स्वयमौपाधिकत्वसम्भवात्तादृशीमेकानुव्याधवतीं प्रख्यां भावयिष्यति, किं श्रोत्रेणेति चेत्—न । अन्योन्याश्रयात् । बुद्धिनिबन्धनो हि व्यपदेशः, पौरुषेयेषु तथा दर्शनात्; तत्रैकानुव्याधवत्या प्रख्यया व्यपदेशोत्पत्तिः तया च सेतीतरेतराश्रयमपरिहार्यमिति । एवमभ्युपेत्योपाधिविरहं उक्तम् । परमार्थतस्तु सोऽपि नास्त्येवेति दर्शयन्नाह—**न चात्रोपाधिविरहोऽपि** ॥ अनेन च '**न च सेनावनवदौपाधिकं(की)**' इत्यादेः परिहारप्रक्रम इति वेदितव्यम् । कारणमाह—**अस्ति खल्वेकाभिधेयधीहेतुः ... व्यपदेशः** ॥ अनेन चैकार्थतादूषणादुद्धर्तुमुपक्षिप्तेति वेदितव्यम् । उद्धरति—**न चैवमन्योन्याश्रयम्** ॥ अत्र कारणं प्रसक्ति-

---

१. 'अभिधेयधीहेतुभावः' इति मु. पु. पाठः । 'हेत्वभाव इति ३ पु. पाठः' इति टिप्पणी ।

२. 'व्यपदेशः प्रभवति' इति मु. पु. पाठः ।

न्याश्रयम् । न हि पदावधारणाधीनः सम्बन्धबोधः, किन्तु तदधीनं पदज्ञानम् । कारकभेदाभिधायि हि पदं, पद्यतेऽनेनेति व्युत्पत्त्या । तच्छब्दाश्च कार्यसम्बन्धोपहित-

हेतुविपर्ययं दर्शयन्नाह—न हि पदावधारणाधीनः ...... पदज्ञानम् ॥ तच्छब्देन सम्बन्धबोधं परामृशति । अनेन च 'न चैकार्थसम्बन्धाख्यानमेकपदतामापादयती'त्यस्य प्रतिप्रसवः कृत इत्यनुसन्धेयम् । अत्र च 'न चैवमन्योन्याश्रय'मिति पूर्वोपन्यस्तमन्योन्याश्रयद्वयमपि निषिद्धम् । 'न हि' इत्यादिना पश्चादुक्त एव प्रयत्यते, तत्परिहारद्वारेणैवेतरपरिहारसम्भवादिति वेदितव्यम् ॥

ननु किमिदमुच्यते—न हि पदावधारणेत्यादि ॥ न हि जातुचित्सम्बन्धज्ञानाधीनं सम्बन्धिज्ञानम् । न खलु कुण्डं बदरं वा सम्बन्धग्रहणादवेति । किन्तु कुण्डबदरज्ञानाधीनं तत्सम्बन्धज्ञानमेव । तथा चोक्तं—'अनाश्रितपदरूपाणामप्रत्यायकत्वेनासम्बन्धिनां सम्बन्धाख्यानानुपपत्तेः' इति ॥

अथान्यदेव भवतां पदशब्दवाच्यं न सम्बन्ध्येवाभिमतं, तर्हि तदुच्यतां, अत आह—कारकभेदाभिधायि हि पदम् ॥ अयमर्थः—नास्माकं सम्बन्ध्येवाभिमतं पदशब्दवाच्यम् । किन्तु सम्बन्धिगतो धर्मभेदः, स च कारकविशेष इति । किं (कः) पुनः कारकविशेषः? करणत्वं नाम । तच्च ज्ञानक्रियायामिति दर्शयन्नाह—पद्यतेऽनेनेति व्युत्पत्त्या ॥ इदमाकूतम्—'पद गतौ' इत्यस्माद्धातोर्निष्पन्नोऽयं करणे शब्दः । 'गत्यर्थाश्च ज्ञानार्थाः' इति ज्ञानकरणमनेनाभिधीयते । न च धूमादिषु प्रसङ्गः, पङ्कजादिवद्रूढत्वस्याप्यङ्गीकरणादिति । 'अवध्यन्तरपरिग्रहेऽपि तत्त्वे वर्णानाम्' इति यदुक्तं तत्परिहरन्नाह—तच्छब्दाश्च कार्यसम्ब-

१. 'पदविज्ञानं' इति मु. पु. पाठः ।

२. 'कारकभेदावधायि हि पदपदं' इति मु. पु. पाठः । 'कारकभेदाभिधायी'ति ३ पु. पाठः । 'कारकविशेषाभिधायकम्' इति टिप्पणी ।

३. 'कार्यसम्बन्धबोधोपहितसीमानः' इति मु. पु. पाठः । 'कार्यो यः सम्बन्धबोधः तेन प्रापिता पदभेदरूपा सीमा अवधिर्येषां तादृशा इत्यर्थः ।' इति टिप्पणी ।

सीमानो नासति तस्मिन्प्रवर्तितुमीशते । न च स्वरूपभेद-स्तादृशस्तावतां वर्णानां वर्णान्तरेभ्यो (तेभ्यो) वा* ऽतावद्भ्य-स्तावद्भ्यो वाऽतादृग्भ्योऽन्यविज्ञानोपरोहिणामर्थप्रत्ययात् प्राक् न प्रथते । येन सम्बन्धिभेदाग्रहे न सम्बन्धिभेदो

---

न्धोपहितसीमानो नासति तस्मिन्प्रवर्तितुमीशते ॥ तच्छब्दाः कारक-शब्दाः । तस्मिन् कार्यसम्बन्धे । प्रवर्तितुं स्वार्थेष्विति । इदमाकूतम्—'न खल्वविदितपदरूपावधिः अर्थमवैती'त्यप्यसिद्धम् । (सम्बन्ध-ज्ञाना)भावादेव तत्राप्यर्थाप्रतीतिर्न पदत्वाज्ञानात् । सम्बन्धज्ञानानन्त-रन्तु तन्निबन्धनस्य[3] पदत्वस्यापि । तेन प्रत्यासत्तिमोहितधियां पदत्वाज्ञानादिति भ्रमो जायत इति । 'वर्णानामनाश्रितपदरूपाणां अप्रत्यायकत्वेनासम्बन्धिनाम्' इत्येतदपि परिहरन्नाह—न च स्वरूपभेदः ………… प्राक् न प्रथते ॥ अनेन च 'स्मृतिसमारोहिणो वर्णा वाचकाः ततो न गौरवम्' इति चोद्यस्य परिहृत्य पश्चा-द्विवृतस्योपन्यासः पश्चाद्विवृतस्य परिहारस्यासाधुत्वज्ञापनायेति द्रष्टव्यम् । तादृश इति ॥ यादृशेन भेदेन सम्बन्धितामापाद्यत इति । तावतां—यावतां पदत्वमभिहितम् । वर्णान्तरेभ्यः—यथा गौरित्यस्य पचती-त्यस्मात् । तेभ्यो वाऽतावद्भ्यः—यथा वृष इत्यस्य वृषभ इत्यस्मात् । तावद्भ्यो वाऽतादृग्भ्य इति—यथा नदीत्यस्य दीनेत्यस्मात् । न प्रथत इति न किन्तु प्रथत एवेति । यदि न प्रथते ततः किं स्यात्?. तदाह—येन सम्बन्धिभेदाग्रहे न सम्बन्धिभेदो निरूप्येत ॥ येनाप्रथनेन सम्बन्धिनां सम्बन्धाख्यानानुपपत्तेरित्येतत्सत्यं स्यादित्यर्थः । नन्वत उत्तरमप्युक्तं—'तन्नास्ति ; क्रमयुक्तेभ्य इव युगप-

---

१. 'न च स्वरूपभेदस्तावतां तादृशां वर्णानां वर्णान्तरेभ्यस्तेभ्य एव वा-ऽतावद्भ्यस्तावद्भ्यो वाऽतादृशेभ्योऽन्यविज्ञानोपारोहिणां' इति मु. पु. पाठः ।

* (अतावद्भ्यस्तावद्भ्यो वा)—'भिन्नानुपूर्वीकेभ्यः । अर्थज्ञाननैरपेक्ष्येणैव नदी-दीनादिपदेषु स्वरूपभेदः प्रत्यक्षसिद्ध एवेति भावः ।' इति टिप्पणी ।

२. 'अतादृग्भ्यः' इत्यतः परं 'अतः' इत्यधिकं दृश्यते मातृकायाम् ।

३. 'तन्निबन्धनत्वस्य पदस्य क्वापि' इति दृश्यते मातृकायाम् ।

निरूप्येत । प्रकारान्तरवद्भ्यस्तु तेभ्यः तेषामेव चरमविज्ञान-निवेशिनां विशेषमग्रे वक्ष्यामः । तथा च सम्बन्धबोधना-ख्यानमप्यमीषामीषत्करम् । समवधृतैकाभिधेयधीहेतु-भावानां च पश्चात्तेषां 'पदम्' इति व्यपदेशो नानुपपन्नः ॥

अपि चानंशस्य वैशद्यावैशद्ये न युज्येते । सामान्य-

द्विपरीतक्रमयुक्तेभ्योऽप्यर्थप्रत्ययप्रसङ्गात्' इत्यत आह—**प्रकारान्तर-वद्भ्यस्तु ··· विशेषमग्रे पश्यामः (वक्ष्यामः)** ॥ इदानीं वर्णातिरिक्त-दूषणाधिकारादुपेक्ष्यते । पश्चात्तु वर्णानां वाचकत्वं प्रतिज्ञाय 'अपि च वर्णेभ्यो नार्थप्रत्ययो नोपपद्यत इति । न चास्यां क्रमाक्रमविपरीतक्रमानु-भूतानामविशेषो वर्णानाम्' इति प्रस्तावात्तत्रैव वक्ष्याम इत्यर्थः । अतो नास्त्येवेतरेतराश्रयत्वं सम्बन्धाख्यान इत्याह—**तथा च सम्बन्धः ······ ईषत्करम्** ॥ **बोधनं** बोधो ज्ञातृव्यापारः, **आख्यानं** वचनं वक्तृव्यापारः, तयोर्द्वन्द्वैकवद्भावः । एवं च 'तत्रार्थप्रतीत्या पदरूप-विशेषमुपकल्पयतो दुरुत्तरमितरेतराश्रयं प्रसज्येत' इत्यप्यपहस्तित-मित्याह—**समवधृत ···· नानुपपन्नम् (न्नः)** ॥ **पश्चात्** सम्बन्धबोध-नाख्यानानन्तरम् । **तेषां** वर्णानाम् । **'समवधृत'** इत्यादि वर्ण-विशेषणम् ॥

एवन्तावत्पूर्वासु बुद्धिपूत्तरासु च क्रमेण स्फोटात्मनो न प्रकाश-भागितेत्युक्तम् । सम्प्रति प्रकाशभागित्वे यः प्रकारभेदोऽभिमतः सोऽपि नोपपत्तिभागित्युभयीष्वपि सम्भूय दूषणमाह—**अपि चानंशस्य वैशद्यावैशद्ये न युज्येते** ॥ पदस्य वाक्यस्य वेति सिद्ध्यति । यदि

१. 'वक्ष्यामः' इति मु. पु. पाठः ।

२. 'तथा सम्बन्धबोधनाख्यानमप्यमीषामीषत्करं समधिगतैकाभिधेयधीहेतु-भावानां च तेषां पश्चात्पदमिति व्यपदेशो नानुपपन्नः ।' इति मु. पु. पाठः ।

३. 'सामान्यविशेषतत्त्वाभ्यां अनुभूयमानता हि वैशद्यम् । सामान्यमात्रस्य तद्वन्मात्रस्य वा वेदनमवैशद्यम् । न च निखिलसामान्यविशेषविरहिणः स्फोटस्यास्फुटं दर्शनमुपपद्यते ।' इति मु. पु. पाठः ।

अत एव च[1] 'शब्दादर्थं प्रतिपद्यामहे' इति वन्ध्यापत्येतिवदनुपपन्नार्थवचनम्; अनुभवाभावात्। अनुभव

व्यक्तिविशेषपरास्तदभिधायिसमानाधिकरणवृत्तयो जातिशब्दा जातिसङ्ख्यामनुरुध्यन्ते। न जातु भवति 'देवदत्तयज्ञदत्तौ ब्राह्मणः' इति, 'धवखदिरा (रौ) वृक्षः' इति वा। नापि समुदायाभिप्रायम्, जातिशब्दानामेकैकव्यक्तिसमवायेन जातेः समुदायनिवेशशून्यतया तदनुपातसामर्थ्याभावेन; ते हि जातीस्तद्वतीर्वा व्यक्तीः निमित्तरूपोपादानेनाचक्षते न समूहम्। न हि भवति, यथा—धवादीनां वनं धवादिवनमिति वा तथा धवादीनां वृक्षो धवादिवृक्ष इति वा॥

ननु दृष्टः समुदायानुपाती जातिशब्दः, 'सहकारो(रा) वन'मिति सामानाधिकरण्यदर्शनात्। न। समूहसमूहिनीर्व्यक्तीराचक्षाणस्य समूहसमूहिनोरभेदविवक्षायां सामानाधिकरण्यम्। तथा च बहुवचनम्। अन्यथा तदनुपातिन एकवचनं स्यात् वनशब्दवत्। न चेह तथा, समुदायशब्दाभावात्, गौरिति गकारादीनां विभक्तैरात्मभिरुपादानात्, बहुवचनाभावाच्च। अत एव न समाहारनिर्देशः। न हि भवति 'धवखदिरं वृक्षमानये'ति, अपि तु, 'धवखदिरौ वृक्षा'विति, समूहसमूहिनोरभेदोपचारात्। नाप्यन्त्यवर्णाभिप्रायम्, पूर्ववर्णपरामर्शात्। तस्मान्नैकं शब्दात्मानमन्तरेण लौकिकवचनोपपत्तिः" इति। तामेतामाशङ्कां परिहरति—**अत एव च ......... अनुपपन्नार्थवचनम्**॥ इदमाकूतम्—'मोपपादि लौकिकं वचनम्। उभयथापि दर्शनात् उपपन्नार्थानामनुपपन्नार्थानाञ्च। न हि वचनानुपपत्तिमात्रेण प्रमाणरहितोऽर्थः शक्यतेऽवसातुम्' इति। **अत इति**॥ '**अनवयवमनुभूयते**' इति वचनस्य रिक्तत्वादेवेत्यर्थः। **वन्ध्यापत्य**शब्दयोः समासमात्रस्योदाहार्यत्वाद्वन्ध्यापत्यादिव(त्येतिव)दिति विभक्त्यापि विना निर्देशः॥

ननु—'असदेतत्, अनुपपन्नार्थत्वाप्रतीतेः। भवति हि जरद्गवादिशब्देष्वनुपपन्नार्थप्रतीतिः। न त्विह तथा। न हि सार्वलौकिकमवि-

1. 'शब्दार्थं इति ३ पु. पाठः' इति टिप्पणी। 'च' नास्ति मु. पुस्तके। 'प्रतिपद्यामह इति स्वपिशाचवटैतिह्यवदनुपपद्यमानार्थवचनं' इति मु. पु. पाठः।

**एव हि प्रमाणमार्गागतो लोकः, तत्त्वावलोकनात्। न पुरुषप्रवादमात्रं, वृथावादोऽपि हि सम्भवति वटयक्षवत् ।**

---

गानेन प्रयोगपथमवतरत्यनुपपत्तिरुपपत्तिमती । विप्रतिपद्यमाना (अपि) हि शब्दे नैनं प्रयोगं नानुमन्यन्ते । न चाप्रमाणत्वम् । अतो नूनमुपलभन्ते प्रमाणेन शब्दात्मानमेकम । यत एवमपहस्तितविप्रतिपत्तयः प्रयुञ्जते पश्चात् । न च पश्चात्तनज्ञाननिर्ग्राशिभ्यो वर्णेभ्योऽर्थप्रत्ययः । तस्मान्नैकांशमात्मानमन्तरेण लौकिकवचनोपपत्तिः' इत्याशङ्क्याह—**अनुभवाभावात् ...... वटयक्षवत्** ॥ कस्मात्कारणादनवयवमनुभूयत इति वचसो रिक्तत्वात् अस्य वचनस्यानुपपन्नार्थतेत्यपेक्षायां अनुभवाभावादित्युक्तम् ॥

ननु किमनुभवाभावेन दर्शितेन? लोको हि शब्दार्थनिर्णयकारणम् । 'सिद्धे शब्दार्थसम्बन्धे लोकतः' इति, 'लोके येष्वर्थेषु' इत्यादावाश्रितम् । लोकश्चाविगानेन प्रयुङ्क्ते इत्युक्तमेव । किं साक्षादनुभवाभावोपन्यासेनेत्याशङ्क्यानुभवाभावादित्येतदेव विवृतं 'अनुभव एवे'त्यादिना। अनुभवस्यापि गव्यादिविपर्ये भ्रान्तित्वात् '**प्रमाणमार्गागतः**' इत्युक्तम् । **लोकः**—'सिद्धे शब्दार्थसम्बन्धे लोकतः' इत्यादौ लोकशब्दवाच्य इत्यर्थः ॥

ननु लोकस्तु भुवने जने वा प्रसिद्धः, कथमनुभवस्य लोकतेत्यपेक्षायामुक्तं—**तत्त्वावलोकनादिति** ॥ परमार्थदृष्टिकरणादित्यर्थः । प्रमाणमार्गागतेः फलं तत्त्वेनि । अवलोकहेतुत्वाल्लोक इत्यनेनोक्तम् । ततश्च लोकयतीति लोक्यतेऽस्मिन्निति वा व्युत्पत्तिरनुसन्धेया ।
यथोक्तं—'लोक्येते चात्र शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽथ वा वृद्धव्यवहर्तृपरम्परा ॥' इति ॥

ननु अस्मिन्वार्तिके व्यवहारस्य लोकत्वमुक्तम्; कथमनुभव एवेत्युच्यते? अत उक्तं—**न पुरुषप्रवादमात्रमिति** ॥ अनुभवगर्भित एव

---

१. 'लोकस्तत्त्वावलोकनात्' इति मु. पु. पाठः । 'लोकैरविसंवादेन तस्य प्रामाण्याङ्गीकारात्' इति टिप्पणी ।

२. 'न पुनः पुरुषप्रवादमात्रं मृषावादोऽपि' इति मु. पु. पाठः ।

यदि त्ववश्योपपादनीयं ततो वरं शब्दशब्दलक्षितानां[1] वर्णव्यक्तीनामेकस्मृतिसमारूढानामेकाभिधेयप्रत्ययोपजनन-लब्धसहभावानामभिन्नकारकावस्थोपपादिताभेदानामेकत्वा-[2]

पुरुषप्रवादो लोकः न व्यवहारमात्रमिति । अनेन चानुभव एवेत्यस्य व्यावर्त्यं दर्शितमिति वेदितव्यम् । ततश्चान्वयव्यतिरेकाभ्यामनुभव एवेत्यायातम् । अनुभवमूरीकृत्य व्यवहारतत्कर्तृपरम्परयोर्लोकत्ववचन-मिति भावः । पुरुषप्रवादमात्रस्यालोकत्वे कारणं तत्त्वावलोकना-दित्युक्तहेतुविपर्ययं दर्शितवान् वृथेत्यादिना । वटच्च(य)क्षवदिति ॥ 'वटे यक्षः प्रतिवसती'ति लोके प्रवादो वृथावादतया सिद्ध इति । यथोक्तं—'जगति बहु न तथ्यं निय(त्य)मैतिह्ययुक्तम् ।' इति ॥ अतोऽनुपपन्नार्थमेवेदं वचनं जरद्गवादिवत् । अबाधबुद्धिस्तु साक्षा-द्बाधकानुदयात् नेदं रजतमितिवत्, अहं स्थूल इत्यादिवत्तु परीक्षकाणां यौक्तिकबाधो भवत्येव । अतो मुधैव तदुपपादनाय वर्णातिरिक्तशब्द-कल्पनेति स्थितम् । लौकिकवचनसमर्थनव्यसनिता वन्ध्यापत्येतिव-द्युक्तिज्ञानमेव जायते इत्युपेक्षितव्यम् । अथवा—अस्त्वेषा समर्थने-त्याह—**यदि त्ववश्योपपादनीयं ........... गोशब्दादिति** ॥ इद-माकूतम्—यदुक्तं 'न तावदिदं शब्दजात्यभिप्रायम्' इति, तत्सत्यमेवोक्त-मिति वेदितव्यम् । यच्च 'न चानाश्रितव्यावृत्तयो व्यक्तयः' इति, तदपि सत्यमेव । यत्पुनरुक्तं, नापि शब्दव्यक्त्यभिप्रायमिति, तन्न मृष्यामहे इति दर्शितं—**वर्णव्यक्तीनामिति** ॥ वर्णात्मनां व्यक्तीनामिति विग्रहः । 'ते हि जातीस्तद्वृतीर्वा व्यक्तीर्निमित्तरूपोपादानेनाचक्षते' इत्यप्यसिद्धमिति दर्शितम् । **शब्दशब्दलक्षितानामिति** ॥ व्यक्तीनामेव प्रतिपादनहेतुत्वेन गङ्गयेव तीरं जात्या व्यक्तयः स्वाधारभूता लक्ष्यन्त इत्यभिप्रायः । गौरिति गकारादीनां विभक्तैरात्मभिरुपादानेऽपि कथं बहुवचनाभाव इत्यपेक्षायां—**एकत्वादेकवचनमुपपन्नार्थमिति** ॥ औपाधिकादेकत्वा-द्भिन्नात्मनामपि 'द्व्येकयोर्द्विवचनैकवचने' इत्येकत्वविवक्षायामेकवचनो-त्पत्तिरिति भावः । न चात्रोपाधिविरहोऽप्यस्तीत्युक्तम् । **'अभिन्नकारका-**

१. 'शब्दोपलक्षितानां' इति मु. पु. पाठः । २. 'अवस्थापदिता-' इति मु. पु. पाठः ।

देकवचन*मुपपन्नार्थं †गोशब्दादिति । न च 'धवखदिर-वृक्षः' इति न दृश्यते लोक इति दृश्यमानमेतदपह्नवमर्हति ।

---

वस्थापादिताभेदाना'मिति ॥ कुतः पुनः क्रमवर्तिनामभिन्नकारका-वस्थासम्भवः इत्यत्रोक्तं—एकाभिधेयप्रत्ययोपजननलब्धसहभावा-नामिति ॥ कथं वा तादृशैरेकाभिधेयप्रत्ययजननमपीत्यपेक्षायामेकस्मृति-समारूढानामित्युक्तम् । एतच्च विशेषणत्रयं 'न चात्रोपाधिविरहो-ऽपी'त्यादिनिरीक्षणे सुज्ञानमिति वेदितव्यम् ॥

नन्वेवं चेत्, सर्वत्र एव किं नैवं प्रयुञ्जते । तथा सति जात्यन्त-रेष्वप्येवं प्रयुञ्जीरन् । न जातु कश्चित् 'धवखदिरौ वृक्षौ तिष्ठतः' इतिवत् स्थानक्रियाकारकेणैकेनापादितैकत्ववृक्षत्वजातिलक्षितधवादिरूपव्यक्ति—विवक्षया 'धवखदिरवृक्षः' इति प्रयुङ्क्ते । अत उत्प्रेक्षामात्रमेतन्न प्रामाणिक-मिति चेत्तत्राह—न च धवखदिरवृक्षः ...... एतदपह्नवमर्हति ॥ यद्यपि वैयाकरणैः न जातु भवति 'देवदत्तयज्ञदत्तौ ब्राह्मणः' इति 'धवखदिरौ वृक्षः' इति वेति कथितं, तथापि तुल्यन्यायतयाऽत्रापि 'गोशब्दः' इतिवत् 'धवखदिरवृक्षः' इत्यपि प्रयोगः स्यादित्यपि वक्तु-मशक्यमेवेति कृत्वा तस्य परिहाराय प्रस्ताव इति वेदितव्यम् । दृश्यमान-मेतदिति ॥ गोशब्दादिति वचनं अभिन्नकारकावस्थापादितैकत्वगोचरं सत्प्रतिपक्षोपलभ्यमानमित्यर्थः । एवंभूतस्य सत एव दृश्यमानतेति प्रकारान्तरासम्भवात्सिद्धमेवेति ॥ अत एव 'शब्दादर्थं प्रतिपद्यामहे' इति वन्ध्यापत्येतिवदित्यत्रातश्शब्देन पूर्वोक्तानुभवाभावानुसन्धान-मप्येतदर्थमेवेति द्रष्टव्यम् । लोक इति दृश्यमानमित्यत्रापि द्रष्टव्यम् ।

---

* (उपपन्नार्थं)—'उपपन्नमिति ३ पु. पाठः' इति टिप्पणी ।

† (गोशब्दादिति)— 'गोशब्दादित्येकवचनमुक्तक्रमेणैकत्वव्यवहारमात्रोपपत्ते-रुपपन्नार्थकमित्यर्थः' इति टिप्पणी ।

1. 'धवखदिरपलाशा वृक्षः' इति मु. पु. पाठः । 'धवादिषु वनत्वं प्रत्येकं न पर्याप्नोति वृक्षत्वं तु पर्याप्नोतीति विशेषाद्वनमित्येकवचनमेव वृक्षा इति बहुवचनमेव यथा तथा प्रकृते शब्दत्वस्य प्रकृतपर्याप्ततया शब्दा इति बहुवचनमेव युक्तं न त्वेक-वचनमित्याक्षेपाशयः ।' इति टिप्पणी ।

**दर्शनादर्शनयोर्लौकिक[1]त्वेन तुल्यतया बाध्यबाधकभावेन *विषय[2]व्यवस्थोपपत्तेः ॥**

**न चा[3]प्रत्यक्षमर्थधीकार्येण शक्यानुमानम् ।**

---

कारणमाह—**दर्शनादर्शनयोर्लौकिकत्वेन ...... विषयव्यवस्थोपपत्तेः ॥** लौकिकत्वं हि प्रामाण्यकारणम् । तच्चादर्शनवद्दर्शनस्याप्यस्त्येवेत्युक्तम् । अतस्तुल्यवद्बाध्यत्वं बाधकत्वञ्च प्रसज्यत इति व्रीहियवशास्त्रवद्विषयव्यवस्थाऽऽपद्यते । अदर्शनं शब्दत्वजातिव्यतिरिक्तास्वेव जातिष्वसत्त्वमापादयति । दर्शनञ्च शब्द(त्व)जातावेव सत्त्वमापादयतीति विषयव्यवस्थोपपत्तिरिति । अथ वा—दर्शनादर्शनयोरुभयोरपि लौकिकत्वेन तुल्यबलत्वाद्बाध्यबाधकभावेन रूपेण विषयव्यवस्था, परगोचर एव बाध्यत्वं स्वगोचर एव बाधकत्वमित्येवमुपपद्यत इति ॥

एवं '**मीयमानपरित्यागो बाधके नासति स्फुटे**' इत्येतद्व्याख्यातम् । सम्प्रति '**दृष्टात्कार्योपपत्तौ च नादृष्टपरिकल्पना**' इत्यस्य व्याख्यानमुपक्रमते—**न चाप्रत्यक्षं ......शक्यानुमानमिति** ॥ पूर्वत्र पूर्वार्धस्य, मीयमानास्तावद्वर्णाः पदानि वाऽवयवाः ; न च तत्परित्यागः सम्भवति, नेदं रजतमितिवद्बलवद्बाधकाभावात् ; वर्णातिरेकि च यदि मीयमानं स्यात्तदा तस्य न परित्यागः ; किन्तु तदेव प्रतिष्ठितं स्यात् ; न ह्याहत्य तस्मिन्बाधकोपनिपात इति, न तु तत्पूर्वासु बुद्धिषूत्तरासु वा मीयते, वर्णानामेव मीयमानत्वात् ; न च वर्णानां मीयमानतापरित्यागे कारणं स्फुटं बाधकमनुसंहारबुद्धिबोध्यत्वासम्भवादि विद्यते ; तेषामेवौपाधिकैकत्वसम्भवेन तद्बोध्यत्वसम्भवात्, इत्येवं व्याख्यानं कृतमित्यनुसन्धेयम् । अनेन तूपात्तेन ग्रन्थेन '**अर्थधीभेदाद्वाऽन्यथानुपपद्यमानात्**' इत्ययमवशिष्टः कल्पो दूष्यते । इदमाकूतं—

---

१. 'लोकसिद्धत्वेन' इति मु. पु. पाठः ।

* (विषयव्यवस्थोपपत्तेः)—'यथा तैलत्वस्य प्रतिबिन्दुपर्याप्तत्वेऽपि कदाचित् प्रस्थमात्रेऽपि तैलमित्येकत्वव्यवहारः कदाचित्तु तैलानि हेमन्ते सुखानीत्यादिव्यवहारश्च लोकसिद्धत्वेन न विरुद्धस्तथेहापीति भावः ।' इति टिप्पणी ।

२. 'अविषयव्यवस्थोपपत्तेरिति ३ पु. पाठः' इति टिप्पणी ।

३. 'चाप्रत्यक्षमप्यर्थं-' इति मु. पु. पाठः ।

**अन्योन्याश्रयात् । न खलु सत्तामात्रेण शब्दोऽभिधेयधियमाधातुमर्हति । शाश्वततया नित्यमाधानप्रसङ्गात्**

---

अर्थधीभेदाद्व्यवस्थापनं तावदनुमानतस्तावन्नास्ति । ज्ञातसम्बन्धस्यैवानुमानसम्भवात् । न च सम्बन्धग्रहणं स्फोटात्मनोऽप्रत्यक्षत्वात्स्फोटतत्कार्ययोः सम्भवति । न च प्रत्यक्षानुमानाभ्यां व्यतिरिक्तं प्रमाणान्तरं अस्मिन्विद्यतेऽङ्गीक्रियते वा । आगमोऽपि नित्यस्तावदनुपलभ्यमानो नास्मिन्प्रमाणम् । न चानित्यः, निर्मूलत्वात् । उपमानन्तु सादृश्यमात्रविषयमनाशङ्क्यमेव । अर्थापत्तिरप्यस्मिन्न प्रवर्तितुमर्हतीति वक्ष्यते । अतोऽनुमानासम्भवः । न च लिङ्गोत्पत्तिरपि अज्ञाते शब्देऽवकल्पते । न च प्रत्यक्षं तत्र सम्भवतीत्युक्तम् । न च प्रमाणान्तरम् । अतोऽनुमानादेव शब्दं गृहीतवतामर्थप्रत्ययः तेनैव चानुमानमित्यन्योन्याश्रयमपरिहार्यं प्रसज्यत इत्याह—**अन्योन्याश्रयात्** ॥ इतरेतराश्रयमेव स्फुटयति—**न खलु सत्तामात्रेण ...... आधातुमर्हति** ॥ यदि सत्तामात्रेणार्हेत् ततो नेत्रादिवद्रूपादिज्ञानेनान्योन्याश्रयमन्तरेणैवानुमानोत्पत्तिरुपपद्येतेति भावः । कुतः पुनर्नार्हतीत्यपेक्षायामाह—**शाश्वततया नित्यमाधानप्रसङ्गात्** ॥ शब्दो हि नित्यः 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' इति । अतश्च सत्तामात्रनिबन्धनं चेत्कार्यं ततः सत्तायाः सार्वकालीनत्वात् सर्वदैवार्थप्रत्ययः प्रसज्यत इत्यर्थः । अनित्यत्वेन(त्वेपि) शब्दानां वीचीतरङ्गवृत्त्या आरभ्यमाणानां अन्त्यव्यतिरिक्तानां बोधकत्वाभावात्सत्ताव्यभिचाराच्च **सत्तामात्रेण शब्दोऽभिधेय(धिय)माधातुमर्हतीति** । परमार्थतस्तु नित्यत्वस्य स्थितत्वाच्छाश्वततयेत्युक्तमिति । अनाद्यविद्यावासनोपाधिवशात् पदतत्त्वमेकमनेकपदार्थात्मना प्रथते । न तु पदार्थास्ततो व्यतिभिद्यमानात्मानः परमार्थतः सन्तीत्यङ्गीकरणेऽपि

'आरोपविषयारोप्ये नाजानन्नजतभ्रमी'

इति न्यायेन यथा मुखतत्त्वमवगच्छतामेव कृपाणादिषु तदध्यासः,

---

१. 'सत्तया अभिधायकत्वे तस्याः शाश्वतिकतया' इति मु. पु. पाठः ।

इति [1]स्वज्ञानेन तद्धेतुरेषितव्य इति । स्वज्ञानं चास्यार्थप्रत्ययलक्षणलिङ्गप्रभवमिति प्राप्तमन्योन्यै[2]संश्रयम् । [3]अपि च वर्णेभ्यो नाभिधेय[4]प्रत्ययो नोपपद्यते । ते हि गौरिति स्मृतिबुद्धावेकस्यां विपरिवर्तमाना अभिधेय-प्रत्ययस्येशते[5] । न *चास्यां क्रमाक्रमविपरीतक्रमानुभूताना-मविशेषो वर्णानाम् । तथा हि—प्राचीनानुभवभावित-

एवं पदतत्त्वमवगम्यैव तस्यार्थात्मना अध्यासः इत्यवश्यमर्थप्रत्ययात्पूर्वं शब्दो ग्रहीतव्य एवेत्यभिप्रायेणाह—इति स्वज्ञानेन तद्धेतुरेषितव्य इति ॥ प्रथम इतिशब्दो हेतौ । द्वितीयस्तु 'इति किल भवतोऽपि बुद्धिः' इत्येवं योजनीयः यदि दृश्यते । एवं शब्दज्ञानापेक्षिता अर्थ-प्रत्ययस्य दर्शिता; शब्दज्ञानस्याप्यर्थप्रत्ययापेक्षतामाकाङ्क्षाविनिवृत्तये दर्शयति—स्वज्ञानं चास्यार्थप्रत्ययलक्षणलिङ्गप्रभवम् ॥ अस्य—शब्दस्य । पूर्वोक्तेन न्यायेनेति भावः । एवमुक्तमन्योन्यापेक्षित्वमितरे-तराश्रये पर्यवसाययति—इति प्राप्तमन्योन्यसंश्रयम् ॥ भवत्सकाशे प्राप्तमेव न? ...... अथोच्येत? '(वत्स! वेत्सि तावच्छब्दादर्थ-धीरुदी)यत इति ॥ सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति ॥' वर्णानां प्रत्येकमप्रत्यायकत्वात् । साहित्याभावा-न्नियतक्रमवर्तिनामयौगपद्येन सम्भूयकारित्वानुपपत्तेर्नानाप्रयोक्तृप्रयुक्ते-भ्यः प्रत्ययादर्शनात्क्रमविपर्यययौगपद्ये च । तस्माद्वर्णातिरेकि वर्णेभ्यो-

१. 'इति । अतश्च स्वज्ञानं' इति मु. पु. पाठः । 'स्वज्ञानेनेति ३ पु. पाठः' इति टिप्पणी ।

२. 'अन्योन्याश्रयं' इति मु. पु. पाठः ।

३. 'अपि च वर्णेभ्यः' इत्यारभ्य 'अत्रभवन्तो वार्तिककाराः' इति पर्यन्तो ग्रन्थः यथा मुद्रितपुस्तके दीयते, व्याख्याने ग्रन्थपातात् ।

४. 'प्रत्ययो नोपपद्यते । ते हि गौरिति स्मृतिबुद्ध्यावेकस्यां विपरिवर्तमाना अभिधेय' इत्ययं भागः २. पु. नास्तीति टिप्पणी ।

५. 'ईशते' इत्यस्मात्परं २. पु. पाठे 'वर्णमात्रेणोपस्थितौ न समर्था लोका इति शेषः' इति टिप्पणी ।

* (अस्यां) 'स्मृतौ' इति टिप्पणी ।

भावनानिचयलब्धजन्मा स्मृतिरनुभवानुसारिणी तद्गोचरानक्रमानपि तत्क्रमेण क्रमवदनुभवकर्मतोपसृष्टानपर्यायमपि समाकलयन्ती अक्रमविपरीतक्रमानुभूतेभ्यो भिनत्ति । दृश्यते हि नदीदीनेतिस्मृतिधियोरभेदेऽपि वर्णरूपाणां विशदतरः पदभेदः । न चेदमनवयवपददर्शनमिति निवेदितम् । तदनुभवकर्मताक्रमः *परमवशिष्यते । सोऽपि न्यूनातिरेकादिवदेकपदभेदावधारणोपायः । यथाऽऽहुरत्रभवन्तो †वार्तिककाराः—

'पदावधारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्य[1]श्रुतिस्मृतीः ॥' इति ॥

ऽसम्भवन्नर्थप्रत्ययः स्वनिमित्तमवकल्पयति । 'तस्मात्स्वसिद्धान्तव्यामोहमपहायाभ्युपेयतामनुसंहारबुद्धेरेकविषयता' इति । तत्त्वया किं नावहितेन श्रुतम् ? एतदुक्तं भवति—आवयोस्तावत्प्रत्यक्षज्ञानवेद्यः शब्दः ततश्चार्थः प्रतीयत इत्यविवादम् । स तु शब्दो वर्णात्मैव । तेषाञ्च नानात्मनामपि समुदायोऽनुसंहारबुद्धिबोध्यः तस्माच्चार्थप्रत्ययः इति भवतां दर्शनम् । अस्माकन्त्वेकमेव शब्दतत्त्वमनेकवर्णपदाकारेण विवर्तत इति । अनुभवविषयत्वन्तु शब्दस्याविवादसिद्धमेव । तत्र दृष्टेनार्थप्रत्ययेनैव वर्णेभ्योऽनुपपद्यमानेनानुभवस्य वर्णातिरिक्तै[2](कशब्दतत्त्वविषयकत्वं सिद्ध्यतीति ?)............ ॥

'(पदाव)धारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥' इति ॥

---

* (परमवशिष्यते)—'परिशिष्यते इति ३. पु. पाठः' इति टिप्पणी ।

† (वार्तिककाराः)—'श्लोकवार्तिके वाक्याधिकरणे अ० १. पा० १. श्लो० १८०' इति टिप्पणी ।

१. 'स्वरवर्णे' इति मु. पु. पाठः । 'स्वरवाक्ये'ति ३. पु. पाठः । मुद्रिते श्लोकवार्तिकपुस्तकेऽप्येवमेवेति टिप्पणी ।

२. अत्र पुटद्वयपर्याप्तग्रन्थपातो व्याख्यानमातृकायाम् ।

**न च निरन्तरमतिसदृशस्वरबहुवक्तृप्रयुक्तेष्वानुपूर्व्येवत्सु समानस्मृतिबुद्धिसमारोहिष्वर्थप्रत्ययादर्शनाद्व्यभिचार इति साम्प्रतम् ऐकवक्तृप्रयुक्तत्वे विशेषात् ।**

---

यदप्याहुः—

“न प्रत्ययः स्यादेकत्वे प्रयोक्तुरविभाविते ।
न च तस्य परिज्ञानमकस्मादवकल्पते ॥

इदञ्च वर्णवादी वक्तव्यः—किमियं (अ)नानाप्रवक्तृकताऽर्थज्ञानाङ्गं न वा । तत्रानङ्गत्वे वक्तृभेदेऽपि तत्स्यात् । न चेष्यते, दृश्यते वा ।

एवं ह्युक्तं—

‘तेषाञ्च गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्त्रादि क्रमश्चापि विवक्षितः ॥

तत्रै(वक्त्रे)कत्वनिमित्ते च क्रमे सति नियामकम् ।
प्रयुञ्जानस्य यत्पूर्वं वृद्धेभ्यः क्रमदर्शनम् ॥

यौगपद्यन्त्वशक्यत्वान्नैव तेषामिहाश्रितम् ।
कर्तृभेदश्च तत्र स्यान्न चैवं दृश्यतेऽभिधा ॥’ (इति) ।

अङ्गत्वे ज्ञापकानुप्रवेशित्वात् नानवधारितार्थ(प्रतीति)सिद्धि(द्धौ) हेतुः । दृश्यते च तिरोहितव्यवहितोदीरितेभ्यो ह्यर्थज्ञानम् । न च व्यवहिततिरोहितयोरकस्मादेकत्वज्ञानं वक्त्रोः सम्भवति । सम्भवति च स्वरसादृश्ये निरन्तरोच्चारणे वक्तृभेदेऽपि कलकलशब्दश्रुतौ च अर्थज्ञानम् । कस्तत्र वक्तुरेकत्वनानात्वे विवेक्तुं क्षमः ? न च ध्वनिमात्रश्रवणं तत्र, वर्णवाक्यपदपरिच्छेदानामपि केषाञ्चिद्भावात्” इति । तत्रानङ्गत्वं भवदुक्तादेव कारणान्नाद्रियत इत्याह—**न च निरन्तर ......... विशेषात् ॥**

---

१. ‘एकवक्तृप्रयुक्तत्वेन विशेषणात्’ इति मु. पु. पाठः । ‘एकवर्गप्रयुक्तत्वेनेति ३. पु. पाठः’ इति टिप्पणी ।

*यथाहुः—

'यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥' इति ।

†यथा वा—

'तेषां च गुणभूतानां अर्थप्रत्यायनं प्रति ।
साहित्यमेकवक्त्रादि क्रमश्चापि विवक्षितः ॥' इति ।

---

यथाहुः— 'यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥' (इति) ।

यथा वा—

'तेषां च गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेकवक्त्रादि क्रमश्चापि विवक्षितः ॥' इति ।

**'ते हि गौरिति स्मृतिबुद्धौ सामस्त्येनैकस्याम्'** इत्यादिनोक्तेषु गौरितीत्यस्य प्रकारस्य व्यभिचाराय **निरन्तरमतिसदृशस्वरेति** विशेषणम् । अनुभवकर्मताक्रमस्याविकलत्वायानुपूर्व्यवत्स्वित्युक्तम् । एकस्यां स्मृतिबुद्धौ विपरिवर्तमाना इत्येतदप्रच्युतमिति दर्शितं—**समानस्मृतिबुद्धिसमारोहेष्विति** ॥ **एकवक्तृप्रयुक्तत्वे** इति । एकेन वक्त्रा प्रयुक्तत्वे सति वर्णानां बहुवक्तृप्रयुक्तत्वात् **विशेषात्**—अतिशयादित्यर्थः । कार्यान्यथानुपपत्तिकल्प्यत्वाद्विशेषस्य । न चानवयवदर्शनादर्शनकृतोऽयं विशेष इति दर्शितमेवेति भावः । 'यावन्तो यादृशाः' इत्यनेनैव नैरन्तर्यादिवद्वक्त्रैकत्वमपि स्वीकृतमित्यभिप्रायेण प्रथमं तदुपादानम् । अथवा साक्षादेवान्यस्मिन्वार्तिके स्वीकृतमिति दर्शयतोक्तं—**यथा वा—तेषामिति** ॥ एवमङ्गं वक्त्रैकत्वमुक्तमित्युक्तम् । सम्प्रत्यङ्गत्वे ज्ञापकानुप्रवेशा-

---

* (यथाहु)—'श्लोकवार्तिके सम्बन्धाक्षेपवार्तिके अ० १. पा० १. अ० ५. श्लो० ६९.' इति टिप्पणी ।

१. 'प्रतिपादकाः' इति मु. पु. पाठः ।

† (यथा वा)—'तेषां च...विवक्षितः' अयं भागः मु. पु. न दृश्यते ।

२. एतद्व्याख्यारीत्या मूले ६६ पुटे 'सामस्त्येन' इत्यपि स्यादित्यनुमीयते।

*न चैतत्कलकलश्रुतावशक्यज्ञानम् । किमिव हि दुष्करमभ्यासस्य ? [1]यदाहुर्बाह्या अपि—

'[2]परेषामनुपाख्येयमभ्यासादेव जायते ।
मणिरूपादिषु ज्ञानं तद्विदामानुमानिकम् ॥' इति ।

न च सम्बन्धाख्यानसमये वक्त्रेकताया †अनाश्रया-

---

दित्यादि दूषणं परिहरन्नाह—न चैतत्कलकलश्रुतावशक्यज्ञानम् ॥ वैयाकरणग्रन्थे यद्यपि तिरोहितव्यवहितयोरित्याद्यप्युक्तम् । तथापि कलकलश्रुतौ चार्थज्ञानमित्यवसान (कथि ?) तस्य दुष्करत्वाभिप्रायात् तदेव निबन्धनकृतोपात्तमिति वेदितव्यम् । कारणमाह—किमिव हि दुष्करमभ्यासस्य ? न किञ्चिदपीत्यर्थः । दुष्करत्वाभावे प्रसिद्धिं किमिवेत्यनेन सूचितामेव दर्शयन्नाह—यदाहुर्बाह्या अपि—

'परेषामनुपाख्येयमभ्यासादेव जायते ।
मणिरूपादिषु ज्ञानं तद्विदामानुमानिकम् ॥' इति ॥

बाह्या अपीत्यनेन मानेन यथा मेयधीरेवमभ्यासस्य दुष्करत्वा(रा)भावोऽपि सर्वतन्त्रसिद्धान्त एवेति दर्शितमिति । अथवा—नास्तिका अप्यत्र न विप्रतिपद्यन्ते । तथा सति आस्तिकेषु तत्प्रतिपादनक्लेशो मुधैवेति ॥

यच्चानन्तरमुक्तम्—

"सम्बन्धज्ञानसमये ज्ञायते न नियोगतः ।
तिरोहितव्यवहितप्रयुक्ता वक्तुरेकता ॥

आवृतदूरवर्तिवक्तृप्रयुक्तेष्वपि वर्णेष्वविदुषे विद्वानर्थमाचष्टे । न च तत्र वक्तुरेकतामाश्रयति प्रतिपादकः । नापि तदनुपात्तं प्रतिपाद्य(ः)

---

* 'तथा च तेषां गुणभूतानामर्थप्रत्यायनं प्रति साहित्यमेकवक्त्रादिक्रमश्चापि विवक्षित इति ' इत्यधिकं ३. पु. वर्तते इति टिप्पणी ।

१. 'यथाहुः' इति मु. पु. पाठः ।

२. वाक्यपदीये काण्डे १. श्लो० ३५. मुद्रितपुस्तके 'परेषामसमाख्येयमिति, मणिरूप्यादिविज्ञानामिति (तद्विदां नानुमानिकमिति) च पाठः' इति टिप्पणी ।

† (अनाश्रयात्)—'न्यूनाश्रयादिति ३. पु. पाठः' इति टिप्पणी ।

**दनङ्गत्वम्, हेत्वन्तरसिद्धेः। स्फुटतरतया तु तदनाख्यातम्। न खलु नैरन्तर्यादयोऽप्याख्यायन्ते ॥**

---

स्वयमेव प्रतिपद्यते ; यथोपलब्धस्य सम्बन्धाख्यानाद्वक्तुरेकनायाश्च निमित्तमन्तरेण प्रतिपत्तुमविभवादित्युक्तम् ॥"

तस्मात्—

"अनङ्गे वक्तुरेकत्वे वक्तृभेदे निरुद्धवा ।
संस्कारादावभिन्नेऽपि धीर्हेत्वन्तरसूचनी ॥

तदित्थं सम्बन्धकालेऽनाश्रयणात् प्रत्ययकाले चानावेदनात् अनङ्गे वक्तुरेकत्वे (वक्तृभेदेऽपि वर्णोपलब्धि)संस्काराद्यविशेषादुत्पत्तुमर्हदर्थ-ज्ञानमनुत्पद्यमानं निमित्तान्तरजन्मानमात्मानमावेदयति" इति । एत-दपि परिहरन्नाह—**न च सम्बन्धाख्यानसमये........अनङ्गत्वम् ॥** अनाश्रयश्च वक्त्रा श्रोत्रा चेति द्रष्टव्यम्। अथवा वक्त्रैव, श्रोत्रा अना-वेदनादित्यर्थसिद्धम्। अनेन च 'सम्बन्धज्ञाने'त्यारभ्य 'तस्मादनङ्गे वक्तु-रेकत्वे' इत्यन्तस्य निषेधः; हेत्वसिद्धौ 'वक्तृभेदे' इत्यादि साध्य-निषेधोऽर्थसिद्ध इत्याद्यु(त्यु)पेक्षितः । अनाश्रयानङ्गत्वयोर्न हेतुहेतुमद्भाव इत्युक्तं, तत्र कारणमाह—**हेत्वन्तरसिद्धेः ॥** हेत्वन्तरञ्च तद्भावभावो विवक्षितः । अनाश्रयस्तु हेतुहेतुमद्भावाभावमन्तरेणाप्युपपद्यत एवे-त्याह—**स्फुटतरतया तु तदनाख्यातम् ॥ तत्**—वक्त्रैकत्वं, श्रोता तु प्रतिपद्यत एवेति भावः । तदेति पाठे सम्बन्धाख्यानसमय इत्यर्थः । नाख्यातं वक्त्रैकत्वमित्यर्थसिद्धम् । अनाख्यातमिति वा च्छेदः । भावे वा निष्ठा। ख्यानमिति वा पाठः । भावल्युडन्तयोस्तु तथे(तदे)ति पाठे वक्त्रेकताया इति सिद्ध्यति। समासे तु तच्छब्देन वक्त्रेकतायाः परामर्श इति । एवं हेत्वन्तरसिद्धत्वादङ्गत्वस्य नानङ्गत्वं, अनाख्यान-न्त्वनुक्तसुज्ञानत्वादित्युक्तम् । एतदेव स्थिरीकुर्वन्नाह—**न खलु नै-रन्तर्यादयोऽप्याख्यायन्ते ॥** अयमर्थः—न खल्वेकं वक्त्रेकत्वं लक्षीकृत्य प्रयोक्तव्यम् । वक्त्रेकत्ववदेव नैरन्तर्यादीनामपि वर्णानां

---

१. 'हेत्वसिद्धेः' इति मु. पु. पाठः ।

२. 'तदनाख्यानम्' इति मु. पु. पाठः ।

तद्भावभावस्तु नैरन्तर्यादिवद्वक्त्रेकत्वेऽपि तुल्यः। न च ज्ञापकहेतुः विदितसमस्तज्ञापकाङ्गो ज्ञापयतीत्यप्यैकान्ति-

पदभावेऽङ्गत्वेनाङ्गीकरणात्। न च तेऽपि वक्त्रा आश्रीयन्ते सम्बन्धज्ञानसमये,॰ अङ्गत्वन्तु हेत्वन्तरसिद्धेरेव, स्फुटतरत्वात्तु नाख्यायन्त इति ॥

ननु अनवयवदर्शनाभावादेव वक्तृभेदेऽर्थप्रत्ययादर्शनं न वक्त्रेकत्वाभावादिति न सिद्धा हेत्वन्तरसिद्धिरित्याशङ्क्याह—**तद्भावभावस्तु …… तुल्यः** ॥ इदमाकूतं—न तावदनवयवदर्शनमस्तीत्युक्तमेव। अतो 'यावन्तो यादृशाः' इति नैरन्तर्यादीनामिव वक्त्रेकत्वस्याप्यङ्गभावः स्वीकर्तव्यः । न च नैरन्तर्यादयोऽप्याख्यायन्ते । न च वक्त्रेकत्वमपि । प्रतिपत्ता तु सर्वमेव प्रमाणान्तरेणाङ्गतया प्रतिपद्यत एवेति। ननु नैरन्तर्यादयोऽपि नानवयवपदवाक्यवादिभिरङ्गीक्रियत इति किन्दृष्टान्तेन वक्त्रेकता दार्ष्टान्तिकीक्रियते, उभयोरपि सिद्धमेव दृष्टान्त इति स्थितत्वात्। न च नैरन्तर्यादयः परेषां सिद्धाः 'निरस्तभेदं पदतत्त्वमेकम्' इत्यङ्गीकरणादिति । सत्यमेवमेतत्। इह तु 'वक्तृभेदे निरुद्धवा' इत्यादिदर्शनात्तन्मात्रस्य दूषणमुपक्रान्तं, तत्र च नैरन्तर्यादिदृष्टान्तोपन्यासो नानुपपन्न इति। यदि तत्रापि विप्रतिपत्तिः, ततस्तत्रापि प्रतिविधानं कर्तव्यमेवेति । तच्च कृतमेव अनवयवस्य दर्शनाभावसाधनात् इति ॥

एवन्तावद्वक्त्रेकत्वमनाख्यातमपि स्फुटतया प्रतिपत्ता प्रतिपद्यत इत्यभिप्रायेणोक्तम्। सम्प्रति ज्ञापकानुप्रवेशान्नानवधारितेत्यप्यसिद्धमेवेत्याह—**न च ज्ञापकहेतुः…इत्यप्यैकान्तिकम्**॥ विदितानि समस्तान्येव ज्ञापकभूतान्यङ्गानि ज्ञापकस्यैव वा हेतोस्तस्याङ्गानि यस्य सहकारितया सन्तीति विग्रहः । स्वरूपोपयोग्यङ्गेभ्यो व्यावृत्त्यर्थं ज्ञापकविशेषणम्। षष्ठीसमासेऽपि ज्ञापकावस्थापन्नस्याङ्गित्वमिति सूच्यते । विशेषणे च तात्पर्यं लोहितोष्णीषादिवत् । अतोऽङ्गानामेव वेदने नियमाभावो नाङ्गिनः। ज्ञापकहेतुरिति लिङ्गशब्दानुपपद्यमानेषु विशेषतः प्रसिद्धत्वा-

१. 'तद्भावस्तु नैरन्तर्यादिष्विव वक्त्रेकत्वेऽपि समानः' इति मु. पु. पाठः।

कम् । भवति हि मनोऽनुमानाङ्गम् । न चास्य वेदनमत्रोपयुज्यते । तदिह दृश्यमानेभ्यो दृश्यमानप्रकारानुपातिभ्यः

चक्षुरादौ न व्यभिचार इति । यो हि विदितो भूत्वा ज्ञापयति स ज्ञापकहेतुः, न ज्ञानकारणमात्रमित्यङ्गीकृत्य तदुपकरणानां ज्ञापकानामेव सतां न वेदननियमः । कानिचिद्विदितानि सन्ति सहकुर्वन्ति, कानिचिदविदितान्येवेति । कुत एवं तदधिगतमिति चेत्तत्राह—**भवति हि मनोऽनुमानाङ्गम्** ।। ततः किमित्याह—**न चास्य वेदनमत्रोपयुज्यते** ।। मनसो ह्यनुमानाङ्गत्वम्, सर्वज्ञानोत्पत्तिष्वेव मनसोऽङ्गत्वात् । यथाहुः—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इति । विभुनैवात्मनाधिष्ठितेष्विन्द्रियेषु नानार्थसम्बन्धेष्वपि यत्संयोगक्रमवशाज्ज्ञानोत्पत्तिक्रमः प्रक्रमते तन्मन इति । एवञ्चाणुन एव मनसः सिद्धिः । अन्यथा युगपदनेकेन्द्रियाधिष्ठानाद्युगपज्ज्ञानोदयप्रसङ्गात् । तथा च विभुत्वहेतवः सर्वे सर्वदा स्पर्शरहितद्रव्यत्वादित्यादयो धर्मिग्राहकप्रमाणबाधिता भवन्तीति तार्किकाः । न्यायकणिकायान्त्वेवमेवाश्रितमिति प्रतीयते । यथोक्तं—'इन्द्रियभावस्त्वणुन एव मनसः' इति । भावनाविवेके च—

'मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः' ।। इति ।

अत्र भूतानामिव मनसोऽपि परिस्पन्दं ब्रुवताऽणुत्वमङ्गीकृतमिति प्रतीयते । एवमन्येषामपि वार्तिककारीयाणामणुत्वाभ्युपगमोऽस्त्येव । प्रायेण तु वार्तिककारीया विभुत्वमातिष्ठन्ते । अतो यथा शब्दस्यालौकिको व्यवहा(व्यापा)रोऽभिधा वा विधिः, इष्टसाधनता स्वरूपेण प्रवर्तनारूपेण वा विधिः, इति विधौ, यथा च तमसि द्रव्यगुणत्वयोरित्यादौ वार्तिककारीयाणामेव दर्शनभेदः तथाऽत्रापि द्रष्टव्यम् । तथा,

'सुखादेरापरोक्ष्यस्य साधनं मन इन्द्रियम् ।'

इति सुखाद्यन्यतमग्रहणसाधनत्वं मनसो लक्षणं निबन्धनकृतोऽभिमतमिति द्रष्टव्यम् । अणुत्वन्तु पूर्ववदेव, युगपज्ज्ञानानुत्पत्तेः ।

१. 'तदिह दृश्यमानेभ्य एव वर्णेभ्यो दृश्यमानप्रकारभेदानुयायिभ्योऽभिधेयप्रत्यय उपपद्यमानो नैतानवज्ञायानवयवं' इति मु. पु. पाठः ।

**अभिधेयप्रत्यय उपपद्यमानो *नैवाज्ञातावयवमत्यन्ताननुभूतं पदतत्त्वमुप[1]कल्पयति ; अतिप्रसङ्गात् । न चापि समभि-**

विभुत्ववादिनोऽपि हि सुखाद्यापरोक्ष्यसाधनतया मनोऽनुमाय, मनो विभु, स्पर्शानर्हद्रव्यत्वादित्याद्यनुमानेन विभुतामाश्रित्य सर्वज्ञानेष्वेव मनसोऽङ्गभावमातिष्ठन्त । एवं 'मनसो वेन्द्रियैर्योग' इत्यादिवार्तिकदर्शनादन्यमनस्कस्य सम्प्रयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेश्चेति । **अस्येत्यत्रेति** च सर्वनाम्ना यथाक्रमं मनोऽनुमानयोः परामर्शः । वेदनानुपयोगस्तु कार्यान्यथानुपपत्तिप्रमाणत्वान्मनसः, अनुमानस्य च कार्यान्तर्भावादिति द्रष्टव्यम् । एवञ्च वर्णेषूक्तस्य दोषस्यासत्वात् 'यावन्तो यादृशा' इत्येव स्थितमित्याह—**तदिह दृश्यमानेभ्यो दृश्यमानप्रकारानुपपत्तिभ्यः (नुपातिभ्यः)** । दृश्यमानं प्रकारं येऽनुपतन्ति ते तथोक्ताः । 'यादृशा' इत्यस्यानुवाद एष इति द्रष्टव्यम् । अनुपपत्तिभ्य इति पाठे अदृश्यमानप्रकारानुपपत्तिभ्य इत्यकारप्रश्लेषेण च्छेदः । अदृश्यमाना प्रकारे वक्त्रेकत्वादिके प्रयोक्त्रनुपपत्तिर्येषामेवमिति विग्रहः । किन्तेभ्यो भवतीत्यपेक्षायां आह—**अभिधेयप्रत्यय उपपद्यमानः** ॥ एवं 'वर्णेभ्यो नार्थप्रत्ययो नोपपद्यते' इत्यारभ्योपपाद्य, अन्यथोपपत्तेः पक्षनिष्ठत्वं दर्शितम् । सम्प्रति अन्यथोपपत्तिमर्थापत्तिदूषणे प्रकृते पर्यवसाययति—**नैवाज्ञातावयवमत्यन्ता(न)नुभूतं पदतत्त्वमुपकल्पयति** । **अज्ञातावयवमिति** ॥ अनवयवमित्येवार्थः । तथैव वा पाठः । न चान्यत्प्रमाणमस्तीत्युक्तमेवेति दर्शितं—**अत्यन्ताननुभूतमिति** ॥ न तु कल्पनाभावेऽत्यन्ताननुभवो दोषतया मन्तव्यो गुणत्वात् । न च प्रत्यक्षं प्रमाणमित्युक्तमित्यभिप्रायः । अथवा—अत्र शब्दोऽपरोक्षज्ञानयोग्योऽन्यथानुपपत्त्या कल्प्यते । तद्विषयत्वेन च कल्प्यते योऽयं प्रत्यक्षविषयः शब्दः स वर्णातिरिक्त इति । न च वर्णातिरिक्तं अनवयवमनुभूयते इत्युक्तं, अतोऽनुपलब्धिनिराकृतस्य नानवयवस्य कल्पना शशविषाणवद्युक्तेति सम्भवत्येव कल्पनाभावे दोषत्वे हेतुता । कारणमाह—**अतिप्रसङ्गात्** ॥ अयमर्थः । अन्यथोपपत्तौ सत्यामपि कल्पने

* 'नैवानवज्ञाये'ति ३. पु. पाठः इति टिप्पणी ।

१. 'उपकल्पयितुमर्हति' इति मु. पु. पाठः ।

व्याहृतपदाभिहितपदार्थप्रत्ययाधीनोत्पत्तिर्वाक्यार्थधीरन्यथो-
पपद्यमानाऽनुभूयमानपरस्परव्यावृत्तमूर्तिपदान्यपह्नुत्यात्यन्ता-
परिदृष्टं वाक्यमेकमनवयवमिति[2] । तत्सिद्धमेतदर्थापत्तेरनु-

---

कल्पितेऽपि स्फोटे शब्दान्तरकल्पना, पुनश्च तथा । एवमन्यत्रापि, शक्त्यादौ शक्त्यन्तरादिकल्पनेऽप्यतिप्रसक्तिसम्भवादिति । अथवा—अनुपलब्धिबाधितस्य कल्पने शशविषाणादेरपि कल्पनाप्रसङ्गादिति । तामेवान्यथोपपत्तिं वाक्यान्यथानुपपत्तिदूषणे पर्यवसाययन्नुत्तरार्धमेव योजयति—**न चापि समभिव्याहृत** :....... **अनवयवमिति** ॥ न चापि वाक्यार्थधीरेकं वाक्यमुपकल्पयतीति सम्बन्धः । कुतः ? **अन्यथा**—वाक्यमन्तरेणोपपद्यमानत्वात् । कुतोऽन्यथोपपद्यमाना ? यतः समभिव्याहृतैः पदैरभिहिताः पदार्थाः ये तेषां प्रत्ययेष्वधीनोत्पत्तिर्यस्या इति विग्रहः । एतच्च सिद्धान्त एव साधयिष्यत इति न प्रस्तूयते । अनुभूयमानानि, परस्परं व्यावृत्ता मूर्तयो येषां पदानामिति परस्पर-व्यावृत्तमूर्तीनि, पदानि इति विग्रहः । **अनुभूयमाने**त्यस्य व्यावर्त्यं वैपरीत्यं अत्यन्तापरिदृष्टमिति । **परस्परव्यावृत्तमूर्ती**त्यस्यैकमनवयव-मिति । इह दृष्टादिति पदान्यधिकृत्योक्तमिति दर्शितं **अनुभूयमानानि पदानि** इति । **अदृष्टेति** ॥ वाक्यकटाक्षेणोक्तमिति दर्शितं **अत्यन्तापरि-दृष्टं वाक्यमिति** । इह च '**तदिह दृश्यमानेभ्यः**' इति पदविषयं उत्तरार्धस्य व्याख्यानम् । '**न चापि समभिव्याहृता**' इति वाक्यविषये तस्यैव व्याख्यानमिति विवेक्तव्यम् । उत्तरार्धव्याख्यासमाप्तावितिशब्दः । उत्तरार्धव्याख्यासम्पन्नमर्थं दर्शयति—**तत्सिद्धमेतत्**...**पदवाक्याभाव-साधनीति** ॥ अत्र कथं तन्मात्रनिवृत्तिरभावं साधयतीत्यपेक्षानिवृत्तये 'न चाप्रत्यक्षमर्थधीकार्येण शक्यानुमानम्' इत्युपक्रममूरीकृत्य **तदेक-गोचरे**त्युक्तम् । '**अर्थापत्तेरनुमानस्य वा**' इति निर्देशादेतदुन्नीयते 'येनोच्चारितेन' इत्यादिमहाभाष्ये यदर्थप्रत्ययोन्नेयत्वं शब्दस्योक्तं तत्कि-

---

१. 'परस्परव्यावृत्तमूर्तीनि पदानि' इति मु. पु. पाठः ।

२. 'अनवयवमवगमयति' इति मु. पु. पाठः ।

मानस्य वा निवृत्तिस्तदेकगोचरपदवाक्याभावसाधनीति स्थितं नानवयवमेकं वाक्यं वाक्यार्थस्य बोधकमिति ॥

नापि द्वितीयः कल्पः। तथा हि—

नान्त्यवर्णश्रुतिः स्मृत्या नीता वाक्यार्थबोधिनी।
नस्मृतिस्तदपेक्षत्वाद्यौगपद्यं न चानयोः॥

---

मनुमेयत्वम्, उतार्थापत्तिकल्प्यत्वमिति विकल्प्य '**न चाप्रत्यक्षमर्थधीकार्येण**' इत्यादिना अनुमेयत्वं निराकृत्य '**अपि च वर्णेभ्यः**' इत्यादिना अर्थापत्तिकल्प्यत्वं दूषितम्। श्लोकार्थस्त्वर्थापत्तिविषय एवेति। कृत्स्नश्लोकसम्पन्नमर्थमुपसंहरति—**इति स्थितं ....बोधकमिति॥ साधनी**-शब्दानन्तर इतिशब्दस्तन्त्रेणोभाभ्यां सम्बन्धनीयः। पूर्वत्र प्रकारवचनः। उत्तरत्र हेत्वर्थः। न च पौरुषेयेष्वनेकार्थत्वं दोषः।

'बह्वभिप्रायमप्येकं पुरुषास्तु प्रयुञ्जते।'

इति न्यायात्। एतत्सङ्ग्रहस्तु न्यायसमुच्चये द्रष्टव्यम्॥

एवन्तावत् '**अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकवर्णपदविभागमस्यां निमित्तमिति केचित्**' इति प्रथमः पक्षो दूषितः। वाक्यार्थस्य वाक्यं वाचकमित्यौचित्यात्। एवं च वर्णा एव पदानि तान्येव वाक्यमित्यायातम्। सम्प्रति वर्णवादिनामेव विवादे वाक्यार्थस्य किं मूलमिति निरूपणम्। तत्र च वर्णानामौपाधिकं रूपं पदमिति स्थापितम्। औपाधिकाच्च स्वाभाविकस्य रूपस्य प्राथम्यमिति वर्णस्वरूपं निमित्तमित्यापतति। वर्णस्वरूपस्यापि स्मर्यमाणावस्थायाः अनुभूयमानावस्थायाः प्राथम्यादेकस्य निमित्तत्वसम्भवे वाऽनेककल्पनाया अन्याय्यत्वादन्त्यवर्णपक्षमनन्तरोपन्यस्तं '**पूर्वपूर्वपदपदार्थानुभवजनितसंस्कारसहितमन्त्यवर्णविज्ञानमित्येके**' इति द्वितीयं पक्षं दूषयति—

**नापि द्वितीयः कल्पः। तथा हि—**

**नान्त्यवर्णश्रुतिः स्मृत्या नीता वाक्यार्थबोधिनी।**
**नस्मृतिस्तदपेक्षत्वाद्यौगपद्यं न चानयोः॥**

---

१. 'तदेकगोचरपदवाक्य*स्फोटावभासिनीति नानवयवमेकं वाक्यार्थावबोधकमिति' इति मु. पु. पाठः।

* (स्फोटावभासिनी)—'स्फोटाभावसाधनीति २. पु. पाठः' इति टिप्पणी।

स[1] खल्वयमन्त्यो वर्णः पूर्वपूर्ववर्णपदपदार्थविज्ञान-जनितवासनानिचयसचिवश्रवणेन्द्रियसमधिगतजन्मग्रहण-स्मरणरूपसदसद्वर्णनिर्भासप्रत्यय[2]*विपरिवर्ती पदवाक्यार्थधी-

---

यद्यन्त्यवर्णश्रुतिर्वाक्यार्थबोधिनी तर्हीतरेषामानर्थक्यमिति न वक्तव्य-मिति दर्शयन् पदार्थप्रत्ययवद्वाक्यार्थप्रत्ययेऽपि प्रकारो द्रष्टव्य इति तावदाह—**स खल्वयं ........ उपेयते** ॥ पूर्वपूर्वेषां वर्णानां पदानां पदार्थानां च विज्ञानैर्जनितानां वासनानां निचय एव सचिवो यस्य श्रवणेन्द्रियस्य तादृशाच्छ्रवणेन्द्रियात्समधिगतं लब्धं जन्म येन प्रत्ययेन तस्मिन्ग्रहणस्मरणरूपे तत एव तथा सदसद्वर्णनिर्भासे प्रत्यये विपरिवर्ती पदार्थधियः तथा वाक्यार्थधियश्च हेतुरभ्युपेयतेऽन्त्यवर्ण-वादिना । पूर्वपूर्ववर्णेत्यत्र वर्णग्रहणं पदार्थधीहेतुत्वोपयोगाय । पूर्वपूर्व-वर्णविज्ञानजनितवासनानिचयसचिवश्रवणेन्द्रियलब्धजन्मतादृशप्रत्यय-विपरिवर्ती यथा पदार्थप्रत्ययधीहेतुरुपेयते तथा पदपदार्थविज्ञानजनित-वासनानिचयसचिवश्रवणेन्द्रियसमधिगतजन्मतादृक्प्रत्यय (विपरि) वर्ती वाक्यार्थधीहेतुरुपेयत इति योजना ॥

अथवा—वाक्ये पदपदार्थवद्वर्णज्ञानमपि वाक्यार्थधी-हेतुत्वोपयोग्येवास्तु, अन्वयव्यतिरेकयोस्तुल्यत्वात् । **पदवाक्यार्थधी-हेतुरित्यत्र** पदग्रहणं दृष्टान्तार्थमेव । पदशब्दं विना वा पाठः । अनेन च—

'चित्ररूपाञ्च तां बुद्धिं सदसद्वर्णगोचराम् ।
केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥'

इति पदोक्तप्रकारेण वाक्ये चित्ररूपा बुद्धिरुपदर्शिता । उपन्यासकाले

---

१. 'स खल्वन्त्यो वर्णः' इति मु. पु. पाठः ।

२. 'जन्मस्मरणरूपावासवैचित्र्य' इति मु. पु. पाठः ।

* (पूर्वपूर्व...विपरिवर्ती)—'पूर्वपूर्ववर्णप्रत्यक्षजन्यानां संस्काराणां समूहः सह-कारी यस्य तादृशेन श्रोत्रेण जनितः पूर्ववर्णांशे स्मरणरूपतया चरमवर्णविषये चानुभव-रूपतया प्राप्तरूपद्वयः सतोऽन्त्यस्यासतां च पूर्ववर्णानां प्रकाशको यः प्रत्ययस्तद्विषय इत्यर्थः' इति टिप्पणी । ३. 'वर्ती वाक्यार्थधी-' इति मु. पु. पाठः ।

**हेतुरुपेयते । स[1] चरमपदतदर्थसम्बन्धस्मृतिमाधाय वाक्यार्थ-धिया(यमा)दधीत, अनाधाय वा । आधाय चेत्तद्धेतुभावनो-**

---

तु '**पारमार्थिकपूर्वपूर्वपदपदार्थानुभवजनितसंस्कारसहितमन्त्यवर्ण-विज्ञानमित्येके**' इति पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचक इत्यनेन मार्गेण पूर्वजनितसंस्कारसाहित्यमात्रं दर्शितम् । तत्किमेतत् ? सत्यम्; संस्कारसाहित्यमपि तत्कार्ययोगित्वमेव विवक्षितमित्यनेन दर्शितं वेदितव्यम् । अथवा—अन्त्यवर्णस्य पदार्थबोधकत्वे यानि प्रकारान्तराणि तानि सर्वाणि विवक्षितानि । तेषु पूर्वमुपन्यासकाले संस्कारान्तरानुगृहीतोऽन्त्यो वर्णः प्रतिपादक इति स्मृतिहेतुसंस्कारानुगृहीतो वेत्युभयोरपि साधारण्येनोक्तम् । इदानीं चित्रबुद्धौ गृह्यमाणोऽन्त्यो वर्णः प्रतिपादक इत्ययं पक्ष उपन्यस्तः । कचिद्धि किञ्चिदुपन्यस्तं दूषणं तु सर्वसाधारणमित्यदोषः । **उपेयत इति** ॥ एवं वाक्यान्त्यवर्णस्य वाक्यार्थवाचकत्वमाचक्षाणैरङ्गीक्रियते । अतो नात्रोपपत्तिरस्माभिर्वक्तव्येत्यभिप्रायः ॥ अथवा—पदेषु संस्कारान्तरानुगृहीतान्त्यवर्णवाचकत्वे स्मृतिहेतुसंस्कारानुगृहीतान्त्यवर्णवाचकत्वेऽपि विद्यमाने किमर्थं वाक्ये चित्रबुद्धिग्राह्यत्वमेवोपन्यस्यत इत्यपेक्षायामुक्तं अभ्युपेयत इत्येवं विवेकः ॥

एवं '**अन्त्यवर्णश्रुतिः**' इत्ययमंशो व्याख्यातः । सम्प्रति श्लोकपूर्वोत्तरार्धयोर्विषयव्यवस्थया व्याख्यानाय विकल्पयति—**स चरमपद ...... अनाधाय वा** ॥ **सो**ऽन्त्यवर्णः । चरमपदतदर्थयोर्यः परस्परं सम्बन्धः तत्स्मृतिमिति विग्रहः । अनेन श्लोकगतस्य **स्मृत्ये**त्यस्य व्याख्यानं कृतम् । **अनाधाय वा** चरमपदतदर्थस्मृतिं वाक्यार्थधियमादधीत इति । एवं विकल्प्य प्रथमं शिरो दूषयति—**आधाय चेत् ...... आदधीत** ॥ अयमर्थः—स चरमपदतदर्थसम्बन्धस्मृतिमाधाय यदि वाक्यार्थधियमादधीत, तर्हि तत्स्मृतिहेतुर्या भावना संस्कारः तदुद्बोधोऽवश्यं पूर्वमनुत्पन्नः तदानीमेव कुतश्चित्कारणादुत्पन्न इत्यङ्गीकर्तव्यम् । कारणञ्च सम्बन्धिनोरन्यतरस्य पदस्य श्रवणं,

---

१. 'स च चरम' इति मु. पु. पाठः ।

**द्बोधसमये *स्वजन्यसंस्कारकारणविनाशाघ्रातश्रुतिरश्रूय-माणः सम्बन्धस्मृतिसमये कथं †तत्सहकारी वाक्यार्थ-धियमादधीत । न (च) तदसहकारिणो वाक्यार्थधीहेतु-भाव इति साम्प्रतम् । अस्मरणे तदनुभववैयर्थ्येन गृहीत-**

अन्वयव्यतिरेकानुसारात् । अतः श्रवणानन्तरक्षणे तदुद्बोधः, तदैव चान्त्यवर्णानुभवेन संस्कारान्तरं स्वजन्यमुत्पादितम् । सर्वानुभवाना-मनन्तरक्षणे संस्कारोत्पादनियमात् । संस्कारश्च जन्यः स्वजनकस्यानु-भवस्य विनाशे कारणम् । फलं हि कृत्वैव क्रिया नश्यति । फल-विनाश्यं कर्मेति वदन्ति । ततश्च स्वजन्यसंस्कारकारणकेन विनाशे-नाघ्राता स्वीकृता श्रुतिः यस्यान्त्यवर्णस्य स तथाविधः । अत एव अश्रूयमाणोऽन्त्यवर्णः चरमपदतदर्थसम्बन्धविषया या स्मृतिः तत्समये श्रवणात् श्रोत्रानुभवादुत्तरक्षणो विनाशक्षणः तस्मादप्युत्तरक्षणे कथं तत्सहकारी चरमपदतदर्थसम्बन्धस्मृतिः सहकारी उपायो यस्येति बहुव्रीहिः । अथवा—तया सह स्वकार्यं कर्तुं शीलवानिति । **वाक्यार्थ-धियमादधीत** । न च स्मृतिसमयं उक्त्वा श्रवणसमय एव तदाधान-मिति वक्तव्यम्, तत्सहकारित्वस्याङ्गीकृतत्वादिति भावः ॥

एवं पूर्वार्धो व्याख्यातः । सम्प्रति द्वितीयं शिरो दूषयन्नुत्तरार्धं व्याचष्टे—**न (च) तदसहकारिणो ...... साम्प्रतम्** ॥ **तदसह-कारिण** इत्युक्तार्थम् । अनेन श्लोके '**नस्मृतिः**' इत्ययमंशोऽन्त्यवर्णश्रुति-श्चरमपदतदर्थसम्बन्धस्मृतिरहिता वाक्यार्थबोधिनीति न युक्तमित्येवं व्याख्यातमिति द्रष्टव्यम् । '**तदपेक्षत्वात्**' इत्येतद्व्याचष्टे—**अस्मरणे तदनुभव ...... अर्थप्रत्ययप्रसङ्गात्** ॥ अयमर्थः—चरमपदतदर्थ-सम्बन्धस्यास्मरणे तस्य सम्बन्धस्यानुभवेन कर्तव्याभावात्, स्मरणस्य च तत्प्रयोजनत्वात्, तस्य चानपेक्षिततत्वेनानुभववैयर्थ्यात्, गृहीतसङ्केते-

* (स्वजन्यसंस्कारकारणविनाशाघ्रातश्रुतिः)—'संस्कारस्य स्मृतिनाश्यत्वात्स्मृतौ जातायां संस्कारनाशेनोत्तरज्ञानेन पूर्वज्ञाननाशाद्वर्णप्रत्यक्षनाशेन चेति भावः' इति टिप्पणी ।

† (तत्सहकारी)—'तत्सहकारिणमिति २. पु. पाठः' इति टिप्पणी ।

१. 'वाक्यार्थप्रत्ययं' इति मु. पु. पाठः ।

संङ्गतेरपि प्रथमश्राविणोऽपि 'भिन्धि प्रासेन सिन्धुरम्' इति वाक्यादर्थप्रत्ययप्रसङ्गात् । न चान्त्यवर्णबोधितसंस्कारा स्मृतिरनुभवेन सह युगपदुत्पत्तुमर्हति । न च न्याय्यो युगपदुत्पादः प्रत्ययानाम् । *[2]कारणस्य प्रत्ययपर्याये

रपि तथा प्रथमश्राविणोऽविशेषेणार्थप्रत्ययप्रसङ्गात् । गृहीतसङ्कतेरिवेति क्वचित्पाठः, स साधुः । क्वचित्त्वगृहीतसङ्कतेरपीति । तत्रैतदेव व्याचष्टे—**प्रथमश्राविणोऽपी**त्यनेनेति योजना । श्लोके '**तदपेक्षत्वात्**' इत्यस्य पदश्रवणस्य पदार्थबोधने सम्बन्धस्मृत्यपेक्षित्वस्य स्थितत्वादित्यर्थोऽभिप्रेतः । एतदेवा**स्मरण** इत्यादि व्यतिरेकेण व्याख्यातमिति । अत्रैव दूषणान्तरपरतया चतुर्थपादं व्याचष्टे—**न चान्त्यवर्ण ...... युगपदुत्पत्तुमर्हति** ॥ इदमाकूतं—ननु मा भूद्वर्णश्रवणानन्तरभाविनी स्मृतिः स्मृतेः पूर्वकालीनस्यान्त्यवर्णश्रवणस्य सहकारिणी । मा च भूत् तन्निरपेक्षमेवान्त्यवर्णश्रवणस्य वाक्यार्थबोधित्वं; किन्तु युगपत्कालीना स्मृतिरनुभवस्य सह करोतु । नैवं शक्यम् । संस्कारो हि स्मृतिकारणं, स चोद्बुद्ध एव तत्कारणं, उद्बोधश्च पदानुभवनिमित्तः, सम्बन्धिदर्शननिमित्तत्वात् सम्बन्धस्मृतिकारिसंस्कारोद्बोधस्य, पदस्य च सम्बन्धित्वात्, निमित्तान्तरस्य चानाशङ्कनीयत्वात्, पदान्वयव्यतिरेकानुविधानात्, अनङ्गीकृतत्वाच्च । न चासञ्जातोऽनुभवः संस्कारोद्बोधं कर्तुमीष्टे । अतोऽनुभवानन्तरकालीनत्वात्स्मृतेः स्वकालात्प्रागेवानुभवजन्मकाले(न) जन्मोपपत्तिरिति । एवञ्च वदता यौगपद्यं '**न चानयोः**' इत्येतद्धर्मिविरोधादेव यौगपद्यधर्मोऽशक्याभ्युपगम इत्यभिप्रेतमिति व्याख्यातम् । तत्र च विशेषरूपस्य बाधकत्वं यथा भवति, तथाऽनेन दर्शितम् । ज्ञानवत्त्वसामान्यस्यापि बाधकत्वं दर्शयन्नाह—**न च न्याय्यो ... ... प्रत्ययानाम्** ॥ अन्याय्यत्वे हेतुमाह—**कारणस्य प्रत्ययपर्याये**

१. 'वैयर्थ्येनागृहीतसङ्गतेरपि प्रथमाश्राविणो 'भिन्धि प्रासेन मिदुरम्' इति वाक्यार्थप्रत्ययप्रसङ्गात् । न चान्त्यवर्णोद्बोधितसंस्काराधीनजन्मा स्मृतिः' इति मु. पु. पाठः ।

* (कारणस्य) (करणस्य)—'मनसः । अत एव न्यायसूत्रे—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इति । गौतमसूत्रं—अ० १. आ० १. सू० १६' इति टिप्पणी ।

२. 'करणस्य' इति मु. पु. पाठः ।

सामर्थ्यात् । अन्यथा*समानविषयबुद्धिधारानुपपत्तेः । सहसैव यावत्कर्तव्यकरणात्, (समर्थस्य)[1] क्षेपायोगात् । न च

सामर्थ्यात् ॥ अर्थात्प्रत्ययानां कारणस्येति सिद्ध्यति । अथवा—काकाक्षिवदनुषङ्गेण तन्त्रेण वेत्युक्तप्रकारेण पूर्वमे(वैत्रे ?)व प्रत्ययानामित्येतदत्रापि सम्बद्ध्यते । प्रत्ययपर्याये सामर्थ्यात् । पर्यायेणैव स्वकार्यं प्रत्ययं कर्तुं सामर्थ्यं नान्यथेति यत इत्यर्थः । कारणस्येति ॥ यद्यत्प्रत्ययकारणं प्रत्येत्रा(ता ?) प्रत्येतव्यं करणमिन्द्रियादि तथात्ममनोयोगादिकं, तत्सर्वं ग्रहीतुं कारणस्येति सामान्यवचनमिति द्रष्टव्यम् । कुतोऽवगतमीदृशं सामर्थ्यमस्येति चेत्तत्राह—अन्यथा समानविषयबुद्धिधारानुपपत्तेः॥ अयमर्थः—यदि प्रत्ययकारणस्य प्रत्ययगौगपद्ये सामर्थ्यं स्यात्, तर्हि यद्रूपादिषु बहुषु सन्निहितेषु रूपमेकमेव प्रत्यक्षीक्रियते, तन्नोपपद्यते । अथ यच्चक्षुषा जनितं ज्ञानं तद्रूप(?) . . . . . . त्युच्यते । ततो यदेकस्मिन्नेव विषये बुद्धिधारा दृश्यते तन्नोपपद्यते । कुतो नोपपद्यते इति, (तत्राह—) सहसैव यावत्कर्तव्यकरणात् ॥ अयमर्थः—यत् ज्ञानकारणं तेन यादृशं ज्ञानं कर्तुं शक्यते तादृश(स्य सर्वस्य एक ?)-स्मिन्नेव कस्मिंश्चित्क्षणे कृतत्वेनोत्तरकालमौदासीन्यप्रसङ्गादिति । तदपि कुतः, तत्र(ाह—समर्थस्य) क्षेपायोगात् ॥ अयमर्थः—यौगपद्ये शक्तस्य प्रत्ययकारणस्य कालक्षेपो विलम्बो (न युक्तः ?) । अतो यौगपद्ये शक्तावनुपपद्यमानं समानविषयबुद्धिधारादर्शनं पर्याये सा-(मर्थ्यं) वेदयति । तथा च प्रत्ययानामुत्पत्तियौगपद्यमन्याय्यमिति न स्मृत्यनुभवयोः युगपदुत्पत्ति(सम्भवः ?) । अस्तु पर्याये सामर्थ्यम्, तथापि प्रथमं चरमं पदं श्रोत्रेण गृहीत्वा पुनश्चरमपदतदर्थपद(?) .... तदनन्तरं श्रोत्रेणैव गृह्यमाणोऽन्त्यो वर्णो वाक्यार्थस्य वाचकः, ततो नोक्तदोषप्र(सङ्ग इति) । तत्राह—न च तावन्तं ......... (विज्ञानं

---

* (समानविषयबुद्धिधारानुपपत्तेः)—'प्रथमानुभवेन संस्कारोत्पादाद्द्वितीयादिज्ञानानां स्मृतित्वेन धारावाहिकप्रत्यक्षानुपपत्तेरित्यर्थः ।' इति टिप्पणी ।

१. 'समर्थस्य' इति यथामुद्रितपुस्तके दीयते, व्याख्याने ग्रन्थलोपात् ।

तावन्तं कालमस्ति प्रथमोत्पन्नधीजनितसंस्कारभेदः, यतः पुनरपि चरमविषयं विज्ञानं[1] जनयेत् ॥ यथाहुः—

'क्षणिकं साधनञ्चास्य बुद्धिरप्यनुवर्तते ।
मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ॥' इति ।

जनयेत्) ॥ इदमाकूतम्—श्रोत्रं हि दिगात्मकमाकाशात्मकं वाऽभ्युपेयते । तच्च नित्यत्वाद्ग्रहणावस्थापूर्वावस्थमेव कथं कादाचित्कस्य ग्रहणस्य कारणं स्यात्; तस्मात्पूर्वमनुत्पन्नः तदानीमेवोत्प(द्यमानः ?) कश्चिदतिशय एषितव्यः । स च 'अभिघातेन (हि) प्रेरिता वायवः' इत्यादिना मार्गेण वायुसंयोग(विभाग ?)जन्यः संस्कारः । स च क्षणिक एव, उत्तरकालमग्रहणात्, संस्कारान्तरापेक्षणाच्च । अ (?) श्रोत्रसंस्कार इत्यभ्युपेयम् । तथा च यावति काले स्मृत्युत्पत्त्यनन्तरक्षणे भूयश्चरम(वर्णविषयं ?) ग्रहणमुत्पादयितव्यं न तावन्तं कालं प्रथमोत्पन्ना चरमपदविषया या श्रोत्रधीः तस्या (?) . . . . . . र्थत्वात्तदनन्तरमेव(वा ?)विनष्टश्रोत्रसंस्कारभेदोऽस्ति । यतः पुनरपि चरमपदविषयं विज्ञानं जनयेदिति । **प्रथमोत्पन्नधीजनितसंस्कारे**ति । धीजनकेति पाठो द्रष्टव्यः । अथवा—प्रथमोत्पन्नाया धियः (पुनरु ?)-पादनाय वक्त्रा जनितः श्रोतुः श्रोत्रसंस्कारभेद इति विग्रहो द्रष्टव्यः । 'न च तावन्तम्' इत्यस्यैव प्रसिद्धिं* . . . . . . . . . . . स्मर्यमाणा ? चेद्धेतुः कालान्तरानुभूता कालान्तरे स्मर्यमाणेऽपि हेतुः स्यादिति वाच्यम् । यतः श्रवणेन्द्रियजन्यानुभवगृहीता हेतुः तस्यास्त्ववान्तरव्यापारस्मृतिसमारोह (?) इत्यवान्तरव्यापारत्वं च कर्तृत्वोक्त्यैव सूचितमिति वेदितव्यम् । **वर्णमाले**ति ॥ सर्ववर्णसमुदायः कारणं न त्वन्त्यस्य हेतुत्वमितरेषां सहकारित्वमिति वैषम्यमाश्रीयत इति सूचयति । एवकारेणान्यत्पदपदार्थादिकमिति दर्शयति । पदार्थहेतुत्वे शाब्दत्वाभावात्, पदहेतुत्वे पदार्थत्वप्रसङ्गात्, अन्त्यवर्णाखण्डयोश्च

१. 'विज्ञानं जनयेत्' इत्यारभ्य 'वर्णमालैव वाक्यार्थधीहेतुः' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते; व्याख्याने ग्रन्थपातात् ।

* व्याख्याने एकपत्रपरिमितग्रन्थपातः ।

न चाननुभूयमानस्य सत्तामात्रेण बोधकत्वमित्यसकृदवोचाम ॥

अस्तु तर्हि स्मृतिदर्पणारूढा वर्णमालैव वाक्यार्थधीहेतुः । वृद्धप्रयोगाधीनावधारणो हि शब्दार्थसम्बन्धः । न च पदमात्रं व्यवहाराङ्गं प्रयुञ्जते वृद्धाः, किन्तु वाक्यमेव, तच्चानवयवं *न्यषेधीति स्मृतिसमारूढा वर्णमाला परिशिष्यते[1] । सा च[2] नैमित्तिकं वाक्यार्थबोध-

निराकरणात्, अन्यत्रानुपयुक्ता वर्णमालैव वाक्यं भूत्वा वाक्यार्थस्य वाचिकेति । अथवा—पदार्थस्यापि पदवर्तिनी वर्णमाला वाचिकेत्यभ्युपगम्यते । एवमेव वाक्यवर्तिनी वर्णमाला वाक्यार्थस्य वाचिकेति युक्तमाश्रयितुम्, दृष्टसामर्थ्यत्वात् । मा भूदखण्डं वाक्यं वाक्यार्थस्य वाचकम्, मा च भूत्तदन्त्यवर्णः, तथापि पदान्येव वाचकानि सन्त्विति चेत्; तत्राह—**वृद्धप्रयोगाधीनावधारणो हि शब्दार्थसम्बन्धः** ॥ हिशब्द उपपादने । वृद्धप्रयोगेऽधीनमवधारणं वृद्धप्रयोगस्य वाधीनं अवधारणं यस्येति विग्रहः । यथोक्तं—सिद्धे शब्दार्थ(सम्बन्धे)[3] . . . . . . . . . . . . . . . . . . . . . . . । **(न च पदमात्रं व्यवहाराङ्गं प्रयुञ्जते) वृद्धाः** ॥ **व्यवहाराङ्गं**—व्यवहाराङ्गतयेत्यर्थः । किन्तर्हि व्यवहाराङ्गं प्रयुञ्जत इत्याह—**किन्तु** । उत्तरमाह—**वाक्यमेव** ॥ इदमाकूतं—पदेभ्यस्तावद्वाक्यमर्थान्तरमास्थेयं इदं पदमिदं वाक्यमिति प्रतीतिभेदात्; तस्मात्पदार्थबोधाय पदं प्रयुञ्जते, वाक्यार्थबोधाय च वाक्यमित्यङ्गीकर्तव्यम् । तर्हि तदेवास्तु 'अनवयवमेव वाक्यं वाक्यार्थस्य वाचकम्' इति न वक्तव्यमित्याह—**तच्चानवयवं न्यषेधि** ॥ निषेधश्च **'मीयमानपरित्यागः'** इत्यादिना । ततः किमित्याह—**इति स्मृतिसमारूढा वर्णमाला परिशिष्यते** ॥ इदमाकूतम्—अनवयवं

* 'न्यषेधीदिति २. पु. पाठः' इति टिप्पणी । १. 'अवशिष्यते' इति मु. पु. पाठः ।

२. 'सा च नैमित्तिकं' इत्यारभ्य 'वाक्यार्थधीहेतुरिति' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् । ३. अत्र व्याख्याने ग्रन्थपातः ।

माधत्ते । *पारमार्थिकस्तु पदतदर्थबोधो निमित्तमात्रेणाव-तिष्ठते वर्णमालैव वाक्यार्थधीहेतुरिति । तदयुक्तम् ॥

गौरवाद्विषयाभावात्तद्बुद्धेरेव भावतः ।
वाक्यार्थधियमाधत्ते स्मृतिस्था नाक्षरावलिः ॥

यदि हि वर्णमालैव स्मृतिस्था वाक्यार्थं बोधयेत् ततोऽर्भक ! गामानय, अर्भक ! गां बधान, शिशो ! गामानय,

तावन्निषिद्धमेव, अन्त्यवर्णविज्ञानञ्च । न चान्त्यवर्णे वाक्यत्वप्रतीतिः । पदार्थास्त्वशब्दत्वादेवानाशङ्कनीयाः । पदानां च पदत्वादेव न वाक्यत्व-मित्युक्तम् । अत आदावुपन्यस्तानां पक्षाणामेष एव पक्षो वर्तिष्यत इति ॥ ननु वर्णानां युगपद्ग्रहणाभावात्कथं तत्समुदायसम्भव इत्य-त्रोक्तं—स्मृतिसमारूढेति ॥ स्मृतौ च (?)[५] . . . . . . . . . . . . . . बहवोऽपि वर्णा एकं वाक्यमुच्यत इति विवेकः । दूषयति—तदयुक्तम् ॥ कारणमाह—

गौरवाद्विषयाभावात्तद्बुद्धेरेव भावता(तः) ।
वाक्यार्थधियमाधत्ते स्मृतिस्था नाक्षरावलिः ॥

नाधत्त इति । नाधातुमर्हतीत्यर्थः । अयुक्तत्वे हेतूपन्यासः उत्तरार्धेन । तत्र हेतूपन्यासः पूर्वार्धेन । तत्राद्यं हेतुं व्याचष्टे—यदि हि वर्णमालैव स्मृतिस्था वाक्यार्थं बोधयेत्, अभिदध्यात्, ततोऽर्भक ! गामानय। द्वितीयं वाक्यमुपन्यस्यति—अर्भक ! गां बधान । तृतीयमुपन्यस्यति—शिशो ! गामानय । चतुर्थमुपन्यस्यति—शिशो ! गां बधान ।

* (पारमार्थिकस्तु)—'वाक्यघटकस्मर्यमाणसकलवर्णमालाया एवान्यथानुपपत्त्या वाक्यार्थबोधे हेतुत्वं, पदज्ञानपदार्थोपस्थित्योस्तु तत्र सहकारितामात्रमित्यर्थः ।' इति टिप्पणी ।

१. 'तदप्ययुक्तम्' इति मु. पु. पाठः ।
२. 'नाक्षरावली' इति मु. पु. पाठः ।
३. 'स्मृतिसमारूढा' इति मु. पु. पाठः ।
४. 'अवबोधयेत्' इति मु. पु. पाठः ।
५. अत्र व्याख्याने ग्रन्थपातः ।

शिशो! गां बधान, बाल! गामानय, बाल! गां बधान, डिम्भ! गामानय, डिम्भ! गां बधाने*त्यष्टानां वाक्यानां अष्टौ शक्तयः कल्पनीयास्तवेति कल्पनागौरवम् । पदवादिनस्तु सप्तानां सप्तैव शक्तयः इति कल्पनालाघवम् । शुक्लामिति पदप्रक्षेपेण पुनः पदवादिनोऽष्टानां पदानामष्टौ शक्तयः इति ॥ तव तु षोडशानां षोडशापराः शक्तय

---

पञ्चममुपन्यस्यति—**बाल! गामानय** । षष्ठमुपन्यस्यति—**बाल! गां बधान** । सप्तममुपन्यस्यति—**डिम्भ! गामानय** । अष्टममुपन्यस्यति—**डिम्भ! गां बधान** ॥ **इत्यष्टानां वाक्यानां ......... कल्पनागौरवम्** ॥ न चैतत्पदवादिनोऽपि तुल्यमित्याह—**पदवादिनस्तु ......... कल्पनालाघवम्** ॥

> डिम्भार्भक शिशो बाल गां बधानानयेति यत् ।
> पदसप्तकमेतेन रचिते वचनाष्टके ॥
> शक्त्यष्टकं कल्पनीयं स्याद्वर्णावलिवादिनः ।
> पदानामेव सप्तानां सप्तैव खलु शक्तयः ॥
> पदवादिमते कल्प्या इति स्यात्तस्य लाघवम् ॥

अत्रैव विशेषान्तरमाह—**शुक्लामिति ...... अष्टौ शक्तयः इति** ॥ लाघवमिति सिद्ध्यति । **तव तु षोडशानां........महद्गौरवमापन्नम्** ॥ अयमर्थः—

> शुक्लामिति पदन्यासाद्वाक्ये षोडशके कृते ।
> शक्त्यष्टकं त्वेव भवेदष्टानां पदवादिनः ॥

---

१. 'बालक! गामानय, बालक! गां बधान' इति मु. पु. पाठः ।

* (अष्टानां)—'अन्तानामिति ५. पु. पाठः' इति टिप्पणी ।

२. 'सप्तैव सप्तानां पदानां शक्तयः कल्पनीया इति लाघवम्' इति मु. पु. पाठः । 'लाघवमिति ३. पु. नास्ति' इति टिप्पणी ।

३. 'एवं शुक्लामिति पदप्रक्षेपे पदवादिनोऽष्टानां पदानामष्टौ शक्तयः कल्पनीया इति लाघवम्; तव तु षोडशानां वाक्यानां षोडशापराः शक्तयः कल्प्या इति' इति मु. पु. पाठः ।

इति महद्गौरवमापन्नम् । अपि च, इयमक्षरमाला पदार्थावगमपूर्वकं वाक्यार्थविज्ञानं जनयेत्, अतत्पूर्वकं वा । न तावदतत्पूर्वकम् । संसृज्यमानपदार्थविषयाधीनज्ञानो हि संसर्गो न संसृज्यमानान्पदार्थानन्तरेण शक्य-

वर्णमालावादिनस्तु षोडशानां तु षोडश ।
वाक्यानां शक्तयः कल्प्या इति स्याद्गौरवं महत् ॥

शुक्लपदरहितान्यष्टौ वाक्यानि पूर्वाण्येव । तान्येव च शुक्लपदसहितान्यष्टौ भवन्तीति षोडशवाक्यान्यष्टावेव पदानीति । द्वितीयतृतीयहेतुव्याख्यानायारभते—अपि च ॥ तत्रादौ तयोर्विषयविभागप्रदर्शनाय विकल्पं करोति—(इ)यमक्षरमाला ...... अतत्पूर्वकं वा ॥ विधिनिषेधयोर्विधेरभ्रिमत्वात्पदार्थावगमपूर्वकत्वपुरस्कारः । पश्चिमं शिरो दूषयन्पूर्वं हेतुं व्याचष्टे—न तावदतत्पूर्वकम् ॥ अत्र 'इयमक्षरमाला वाक्यार्थविज्ञानं जनयेत्' इत्यनुक्तमपि सिद्ध्यति । अनेनोत्तरार्धोक्तप्रतिज्ञार्थो दर्शितः । तत्र 'विषयाभावात्' इत्येतद्व्याचष्टे—संसृज्यमान ......शक्यनिरूपणः ॥ अनेन च संसर्गरूपे वाक्यार्थे धियं नाधत्ते, पदार्थानां संसर्गविषयाणामभावात् । न हि सम्बन्धिनावन्तरेण सम्बन्धो ज्ञायत इति व्याख्यातम् ॥

सम्बन्धावगमस्तावत्सम्बन्धिज्ञानपूर्वकः ।
पदार्थानाञ्च सम्बन्धो वाक्यार्थ इति निश्चितः ॥
तस्मात्पदेभ्यः प्रथमं पदार्थानवगच्छताम् ।
पश्चाद्वर्णावली कुर्याद्धियं संसर्गगोचराम् ॥
अतत्पूर्वकपक्षे च न ते सन्ति कदाचन ।
बुद्ध्यन्ते वा कथं तेषां संसर्गो बुद्धिमारुहेत् ॥ इति ।

१. 'अतत्पूर्वा वा । न तावदतत्पूर्वा' इति मु. पु. पाठः । 'अतत्पूर्वं वा । न तावदत्पूर्वमिति ३. पु. पाठः' इति टिप्पणी ।

२. 'संसृज्यमानपदार्थविषयविज्ञानाधीनो हि संसर्गः संसृज्यमानपदार्थनिरूपणमन्तरेण न शक्यनिरूपणः' इति मु. पु. पाठः । 'पदार्थावगममिति ३. पु. पाठः' इति टिप्पणी ।

निरूपणः । तत्पूर्वकश्चेत्; *तथा हि—यथा यथा पदानि श्रूयन्ते [1]तदा(था) तदा(था) पदार्था अपि प्रतीयन्ते । तदेताः पदतदर्थप्रतीतयो [2]भावनानिचयाधानद्वारेण स्वगोचरचारिणीमेकामेव स्मृतिधियमादधति, तदारूढानि पदानि †[3]पदार्थाद्यानिति (घनति)दूरवर्तीनि वाक्यार्थबुद्धेरीशत इति ।

प्रथमं शिरो भापते—तत्पूर्वकश्चेत् । अत्रापि स एव सम्बन्धः । एतदेव विवृणोति—तथा हि—यथा यथा ...... वाक्यार्थबुद्धेरीशत इति ॥ इदमाकूतम् । तत्पूर्वकश्चेदित्यत्र चोद्यते—यदि वर्णमाला वाक्यार्थं बोधयेत् तर्हि पदपदार्थतत्सम्बन्धसंवित् कमिवोपकारं कुर्यात्; पदार्थज्ञानमिति चेन्न । तेनाप्युपकाराभावात् । न हि वाक्याद्वाक्यार्थावगतौ पदजनितेन पदार्थज्ञानेन कश्चिदुपकारः । कोऽपि नाम कल्प्यत इति चेत्, तस्यादृष्टस्य कल्पनैव दोषः । अत्र ब्रूमः—दृष्ट एव पदार्थज्ञानेनोपकारः । तथा हि—'संसृज्यमानपदार्थविषयाधीनज्ञानो हि संसर्गो न संसृज्यमानपदार्थानन्तरेण शक्यनिरूपणः' इत्युक्तमेव । तस्मात्पदार्थज्ञानं तावदुपकार्येव । तच्च पदैरेकैकश आधीयते । तथा हि—यथा यथा पदानि प्रतिस्वमुच्चारणेषु श्रूयन्ते तथा तथा प्रातिस्विकेषु श्रवणेषु पदार्था अपि प्रत्येकमेकैकशः प्रतीयन्त एव । तदेवं सति सर्वा एवैताः पदधियः पदार्थधियश्च यथास्वं संस्कारानुत्पादयन्त्यो भावनानिचयमादधति । तदाधानद्वारेण स्वगोचरे वर्तमानामेकामेव स्मृतिरूपामेव धियं श्रोतुरादधाति । एकैकानुभवेऽपि युगपदेकस्मृतिसम्भवः उक्त एव । एवञ्च तस्यामारूढानि पूर्वं श्रवणावस्थायामेव प्रतिस्वमर्थान्प्रतिपादितवन्ति पदानि; प्रातिस्विकप्रतिपादितानां पदार्थादीनाम्; आदिशब्देन पदार्थसंसर्गस्योपादानम्; अनतिदूरवर्तीनि

*'यथा हि इति २. पु. पाठः' इति टिप्पणी ।

१. 'तथा तथा' इति मु. पु. पाठः ।

२. 'भावनानिचयद्वारेण' इति मु. पु. पाठः ।

† 'अपदार्थानीति ३. पु. पाठः' इति टिप्पणी ।

३. 'सपदार्थान्यदूरवर्तीनि' इति मु. पु. पाठः ।

**तदप्यचतुरश्रम् । एवं सत्यपेक्षणीयेभ्यः पदार्थज्ञानेभ्य एव तत्सिद्धेरलमनया वर्णमालया । तथा तत्सामर्थ्यं निवेद-**

सन्ति संहत्य वाक्यार्थे पदार्थसंसर्गे बुद्धेः । कुत ईशत इति चेत्—**तदारूढानि पदानीति** ।। पदार्थानां प्रतिपादका ये वर्णसमूहा अल्पे ते महासमूहीभूत्वा स्मृतौ भासमाना इत्यर्थः । 'निमित्तमात्रेणावतिष्ठते' इत्यत्रापि पदार्थसन्निधापनद्वारा निमित्तत्वमभिप्रेतमिति वेदितव्यम् । एतदेव 'संहत्यार्थमभिदधति पदानि वाक्यम्' इति वदतो **भाष्यकारस्यापि** सम्मतमिति वेदितव्यम् । अभिहितान्वये तावदभिधानमेव नास्ति । दूर एव संहत्याभिधानम् । अन्विताभिधानेऽपि न संहत्याभिधानं, पदानां प्रातिस्विकाभिधानेन संहत्याभिधानाभावादिति ।।

वर्णावल्यपि वाक्यार्थं पदार्थज्ञानपूर्वकम् ।
अभिधत्ते, विना तेभ्यो नासौ बुद्धिमुपाश्नुते ।।

वर्णावल्यः पदाख्याया अल्पिका नियतास्स्थिताः ।
लोके स्वेषु पदार्थेषु ताः सम्भूय परस्परम् ।।

वाक्यार्थधियमादध्युस्तेषां संसर्ग एव सः ।
तेनेयं भागशो भूत्वा पदार्थानभिधाय नः ।।

विशिष्टार्थप्रबोधाय पश्चाद्भूत्वा महावली ।
अभिधत्ते पदार्थानां संसर्गमिति बुद्ध्यताम् ।।

एवं च सति शाब्दत्वं वाक्यश्चान्यत्प्रसिद्ध्यति ।
'तद्भूतानां क्रियार्थेने'त्यत्राप्येषैव वर्णिता ।। इति ।।

दूषयति—**तदप्यचतुरश्रम्** ।। कारणमाह—**एवं सत्यपेक्षणीयेभ्यः ...... निवेदयिष्यते** ।। एवं सत्यलमनया वर्णमालया, अपेक्षणीयेभ्यः पदार्थज्ञानेभ्य एव तत्सिद्धेरित्यन्वयः । तच्छब्देन वाक्यार्थबुद्धिं परामृशति । **तथा तत्सामर्थ्यमिति** ।। तथा पदार्थज्ञानाधानप्रकारेण वाक्यार्थबुद्धिसामर्थ्यं पदानामित्यर्थः । कचित्तु

१. 'एवं च सत्यवश्याश्रयणीयेभ्यः पदार्थज्ञानेभ्य एव सिद्धेः कृतमनया वर्णमालया । तेषां च सामर्थ्यं निवेदयिष्यामः' इति मु. पु. पाठः ।

यिष्यते । अपि च त्रिचतुरपञ्चपपदवाक्यवर्तिनी* पदार्थ-प्रत्ययव्यवहितापि क्लेशेन वर्णमाला स्मर्यतापि, तदभ्यधिक-पदवति तु वाक्ये सातिदुष्करा ॥

---

तेषां च तत्सामर्थ्यमिति पाठः । पदार्थज्ञानानां वाक्यार्थबुद्धिसामर्थ्य-मिति । अनेन च '**तद्बुद्धेरेव भावतः**' इत्येतत्पदार्थबुद्धेरेव कारणा-द्वाक्यार्थबुद्धिकार्यस्य भावादुत्पादादिति व्याख्यानम् । '**अलमनया वर्णमालया**' इत्यनेन यो हेतुर्वाक्यार्थधियमाधत्ते स न वर्णावलिरिति निषिध्यत इति दर्शितम् । **विषयाभावादि**त्यत्र वाक्यार्थेत्यत्र भागे, **गौरवादित्यत्राधत्त** इत्यत्र भागे, **स्मृतिस्थे**त्यत्रापि, निषेधान्वयादेषोऽप्यर्थो दर्शित इत्यभिप्रायेणाह—**अपि च त्रिचतुर ...... सातिदुष्करा** ॥ त्रिचतुराणि वा पञ्चषाणि वा पदानि येषु वाक्येषु तानि त्रिचतुरपञ्चष-पदानि वाक्यानि तद्वर्तिनी वर्णमालापि तावन्न स्मर्यते, पदार्थप्रत्यय-व्यवहितत्वात् । न हि विलक्षणपदार्थप्रत्ययावरुद्धे चेतसि वर्णमालाया अनुभूताया अपि स्मरणसम्भवः, पदार्थप्रत्ययव्यवहितत्वात्, तद-नन्तरञ्च पदार्थेष्वेवान्योन्याकाङ्क्षोत्थानात्तद्द्वारेण च वाक्यार्थे प्रतीति-सिद्धेरिति नास्त्येव तस्याः स्मृतिर्वाक्यार्थोपयोगिनी । न हि पदार्थाकाङ्क्षायां उदयमासादयन्त्यां पदस्मृतिरपि तावदुपजायते, प्रागेव पदेभ्योऽवरुह्य वर्णमालामात्रस्मृतिः । अथ तु कथञ्चित्क्लेशेन तदानीं वर्णमालामात्र-स्मृतिरप्यस्तीत्युच्यते तथापि त्रिचतुरपञ्चषाभ्यधिकपदवत्सु वाक्येषु सातिदुष्करा वर्णावली स्मर्यमाणतामापादयितुं (अ)शक्येति ॥

अपि च त्रीणि चत्वारि पञ्च षड्वा पदानि चेत् ।
वाक्ये सन्ति तथाप्यत्र स्मर्यते नाक्षरावलिः ॥

---

* (वर्तिनी)—'वर्तिनीनां पदार्थेति २. पु. पाठः । तदा पदव्यक्तीनामिति विशेष्यमध्याहार्यम्' इति टिप्पणी ।

१. 'वर्तिनी नानापदार्थप्रत्ययव्यवहिता' इति मु. पु. पाठः ।

२. 'तु वाक्येऽसावतिदुःस्मरा । तस्मादिदमपि मतं अविमृश्यमानसुन्दरमिति नाद्रियन्ते वृद्धाः ॥' इति मु. पु. पाठः । 'दर्शनमिति ३ पु. पाठः' इति टिप्पणी ।

**तस्मादिदमपि दर्शनं अदृश्यमानसुन्दरं नाद्रियन्ते बुधाः ॥**

**अस्तु तर्हि—**

---

न हि वर्णावलीमात्रं पूर्वानुभवगोचरः ।
पदात्मनानुभूतत्वात्तथा च तदनन्तरम् ॥
पूर्वानुभूतसम्बन्धस्मृतिद्वारा पदार्थधीः ।
पदार्थज्ञाननिचयस्तदनन्तरमेव तु ॥
आकाङ्क्षासत्तियोग्यत्वनिरूपणपुरस्सरम् ।
वाक्यार्थधियमाधत्ते ततः श्रोता प्रवर्तते ॥
निवर्तते वा कुत्रापि कुतश्चिद्वा तथा यदि ।
वर्णावलीमात्रगता भवेत्कथमिव स्मृतिः ॥
अथ क्लेशेन तत्रापि स्मृतिरस्तीति वर्ण्यते ।
तथापि सप्त वाष्टौ वा नव वा दश वा पुनः ॥
पदानि येषु वाक्येषु तेषु वर्णावलिस्मृतिः ।
अशक्या सुतरां कर्तुं न हि तत्र पदेष्वपि ॥
कार्त्स्न्येन स्मृतिरस्तीह प्रत्येकं सहितेषु वा ।
वर्णसंख्यापरिज्ञानमीश्वरस्यापि दुश्शकम् ॥
अतो वाक्यं पदेभ्योऽन्यन्नास्तीत्येवमवस्थितम् । इति ॥

उपसंहरति—**तस्मादिदमपि दर्शनं न (अ)दृश्य ... बुधाः ॥ अदृश्यमानसुन्दरमिति** ॥ पदार्थवाक्यार्थयोरिव पदवाक्ययोर्भेदः, पदार्थवद्वाक्यार्थस्यापि वाच्यत्वम्, यथा च पदार्थसंसर्गो वाक्यार्थः तथा पदसंसर्गो वाचकः, इति सामान्यज्ञानेन सुन्दरतया गृह्यमाणम्, युक्तिनिरूपणेऽन्यथा दृश्यमानम्, पारमार्थिकरूपाज्ञाने सति सुन्दरतया गृहीतमित्यर्थः । अपिशब्देन पूर्वदर्शनसमुच्चयः । अथवा पूर्वस्माद्विशिष्टत्वेनावस्थापितमपीति ॥

सम्प्रति टीकाकारीयमतमुपन्यस्यति—**अस्तु तर्हि** ॥ यद्येवं **तर्हि** अन्यत्सर्वं तिष्ठत्वित्यर्थः । किन्तर्हीत्याह—

पदान्याकाङ्क्षितासन्नयोग्यार्थान्तरसङ्गतान् ।
स्वार्थानभिदधन्तीह* वाक्यं वाक्यार्थगोचरम् ॥
पदार्थमेव हि (एकं) प्रधानं गुणभूतार्थान्तरव्यतिषक्तं

---

पदान्याकाङ्क्षितासन्नयोग्यार्थान्तरसङ्गतान्
स्वार्थानभिदधन्तीह वाक्यं वाक्यार्थगोचरम् ॥

यदिह शास्त्रे लोके वा वाक्यं वाक्यार्थगोचरमभिमतं तत्पदान्येव । कीदृशानीत्यपेक्षायां पदविशेषणम्—आकाङ्क्षितेत्यादि ॥ 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधस्य 'वा नपुंसकस्य' इति नपुंसकेष्वनित्यत्वादभिदधन्तीति नुमः प्रयोगः । अथवा—'अस्तु तर्हि' इत्यस्य श्लोकेन सहैकवाक्यतास्तु । श्लोकस्यानन्तरं इतिशब्दोऽध्याहार्यः । तर्हि, इति—एवं, अस्तु इति सम्बन्धः । अथवा—इतिशब्दाध्याहारं विना तर्हि तादृशान्पदार्थानभिदधन्ति पदानि नाम वाक्यमिह वाक्यार्थगोचरमस्त्वित्यन्वयः । 'वाक्यार्थगोचरम्' इति बहुव्रीहिः ॥

ननु पदार्थानां संसर्गो वाक्यार्थः ; न च पदानि पदार्थेभ्योऽन्यत्र व्याप्रियन्ते ; न च संसर्गः पदार्थत्वेन व्युत्पन्नः इति कथं पदानि नाम वाक्यं वाक्यार्थगोचरं स्यात् ; अत आह—**पदार्थमेव हि ...... आचक्षते धीराः** ॥ न तावद्भेदम् ; न च पदार्थसंसर्गमाचक्षते, किन्तु पदार्थमेव संसर्गिणम् । तर्हि कथमर्थैकत्वादेकवाक्यत्वम्, पदार्थानां बहुत्वात् ? अत उक्तम्—**एकमिति** ॥ एकत्वे को नियमः ? अत उक्तम्—**प्रधानमिति** ॥ नन्वितरपदानां येऽर्थाः ते सर्वे यदि (अर्थान्तरव्यतिषक्ता आख्यायन्ते तदा कथं न वाक्यभेद इति ; तत उक्तम्—?) **गुणभूतार्थान्तरव्यतिषक्तमिति** ॥ गुणभूतार्थव्यतिषक्तप्रधानपदार्थस्य वाक्यार्थस्यैकत्वादेकवाक्यत्वम्, गुणप्रधानभेद एव वाक्यभेदः, अङ्गप्रधानवाक्यभेदयोरपि गुणान्वितप्रधानभेदोऽस्त्येव वाक्यभेदावस्थायाम् ।

---

१. 'अर्थान्' इति मु. पु. पाठः ।

* (अभिदधन्ति)—'अभिदधन्ति पदानि वाक्यम् । वाक्यपदेन पदसमूह एव व्यवह्रियत इति यावत् ।' इति टिप्पणी । 'वाक्यवाक्यार्थगोचरमिति २ पु. पाठः' इति टिप्पणी ।

२. 'गुणभूतार्थान्तरेण व्यतिषक्तं वाक्यार्थमाचक्षते वृद्धाः' इति मु. पु. पाठः ।

**वाक्यार्थमाचक्षते धीराः । तच्च पदान्येवाकाङ्क्षाद्युपधान-लब्धसुकरव्यतिषक्तीनि प्रयोजयितुमीशत इति कृतम-**

यदा तु ग्राहकग्रहणं तदैकवाक्यमेवेति । **आचक्षते धीरा इति** ॥ 'तद्भूतानां क्रियार्थेन समाम्नायः', 'आम्नायस्य क्रियार्थत्वात्', 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः', 'भावनैव च वाक्यार्थः' इत्यादिषु । एवं **'स्वार्थानभिदधन्ति', 'वाक्यार्थगोचरम्'** इत्यनयोः सङ्गतिर्दर्शिता । **'पदानि', 'वाक्यम्'** इत्यनयोरपि सङ्गतिसम्भवं दर्शयन्नाह—**तच्च पदान्येव ... वाक्यादिकल्पनाभिः** ॥ **प्रयोजयितुमिति** ॥ प्रबोधयितुमिति पाठः । अथवा प्रयोजयितुमनुष्ठापयितुमित्यर्थः । प्रबोधनं ह्यनुष्ठापनमिति भावः । न च पदानि केवलान्स्वार्थानभिदध्युः नान्वितानिति वाच्यम् । विशिष्टार्थविषयव्यवहारदर्शनेन हि व्यवह्रियमाणविशिष्टविषयैव व्युत्पित्सुना संविदुन्नीयते । सा च पदश्रवणानन्तरमुपजायमाना तत्कारणिकैव निश्चीयत इति दर्शितम् । **'पदान्येव'** इत्येवकारेण न पदातिरिक्तं वाक्यमिति दर्शयति । अथवा—यानि पदार्थस्य वाचकत्वेन निर्ज्ञातानि तान्येवेति । ननु व्यतिषक्ते सिद्धे पदैस्तदभिधानम्; न च व्यतिषङ्गमन्तरेण व्यतिषक्तसिद्धिः; अतो व्यतिषङ्गोऽपि पदैरेव बोधनीयः; अत उक्तम्—**आकाङ्क्षाद्युपधानलब्धसुकरव्यतिषक्तीनीति** ॥ व्यतिषक्तिर्व्यतिषङ्गः, सुकरा व्यतिषक्तानां व्यतिषक्तिर्येषाम्; व्यतिषक्ताभिधानमेव पदकार्यं व्यतिषक्तादेव व्यतिषङ्गसिद्धेः तस्याः सुकरत्वम् । कथं सुकरत्वम्? अत उक्तम्—**आकाङ्क्षाद्युपधानेति** ॥ आकाङ्क्षायोग्यतासत्त(त्तीनां) उपधानमुपाधिः तेन लब्धा, अत एव सुकरा, व्यतिषक्तानामन्योन्यं व्यतिषक्तिर्येषु पदेषु तानि तथोक्तानि । व्यतिषक्तेषु पदैरभिहितेषु व्यतिषक्तैरेवाकाङ्क्षायोग्यतासत्त्युपहितैरन्योन्यव्यतिषङ्गसिद्धेः न पदानामन्वितेषु अन्वये च शक्तिः कल्प्येति । **अप्रामाणिकानुपपद्यमानानवयववाक्यादिकल्पनाभिरिति** ॥ आदिशब्देनान्त्यवर्णावलीपक्षयोरुपादानम् । अनुपपद्यमानानां अनवयववाक्यादीनां कल्पनाभिरिति । ननु 'न (हि) दृष्टेऽनुपपन्नं नाम' इति प्रामाणिकत्वे

१. 'सुकरव्युत्पत्तीनि प्रत्यापयितुमीशते' इति मु. पु. पाठः ।

प्रामाणिकानुपपद्यमानानवयववाक्यादिकल्पनाभिः ॥

ननु

पदान्तरस्य वैयर्थ्यमश्रुतान्वयबोधने* ।
श्रुतान्वितामिधाने तु व्यक्तमन्योन्यसंश्रयम् ॥

अथापि स्यादनभिहितेनैवार्थान्तरेणान्वितमर्थमभिदधीत पदम्, अभिहितेन वा। †तत्रानभिहितस्वार्थान्तरान्वितस्वार्थाभिधाने पदादेकस्मादेवोच्चारिताद्विवक्षितार्थप्रतीतेः वैयर्थ्यमितरेषाम् । अभिहितान्विताभिधाने तु यावत्पचेदित्यनेनान्वितस्वार्थो नाभिधानीयः, तावत्तूखायामित्यनेनाधिकरणमुखा नाभिधीयते । एवमुखायामित्यनेनापि यावत्स्वार्थो

---

सत्यनुपपत्तिपरिहारोऽपि कश्चित्सिद्ध्येत् ; न तु तदप्यस्तीत्युक्तम्—अप्रामाणिकेति॥ अप्रामाणिकत्वं चानवयववाक्यस्य स्वरूपे, अन्वयोर्वाक्यत्व इति । अथवा—अप्रामाणिकेत्यनवयववाक्यविशेषणम्, अनुपपद्यमानेत्यनयोः इति भेदः । अथवा—अप्रामाणिकानां वादिनामनुपपद्यमानेषु अनवयववाक्यादिषु कल्पनाभिरिति विग्रहः ॥

अभिहितान्वयवादी चोदयति—ननु

पदान्तरस्य वैयर्थ्यमश्रुतान्वयबोधने ।
श्रुतान्विताभि(धाने तु व्यक्तमन्योन्यसंश्रयम्) ॥

.................... श्लोकव्यावर्त्यां शङ्कां निषेधयन्नाह—

---

* (बोधने)—'कल्पने इति ३ पु. पाठः' इति टिप्पणी ।

१. 'श्रुतान्विताभिधाने' इत्यारभ्य 'अनुपपद्यमानमापद्येत' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् ।

† (अनभिहितस्वार्थान्तर)—'अनभिहितार्थान्तरेति ३ पु. पाठः' इति टिप्पणी । 'अनभिहितं स्वेनानुपस्थापितं स्वबोध्यत्वेनाभिमतमर्थान्तरं तदन्वितस्वार्थस्याभिधाने इत्यर्थः' इति टिप्पणी ।

२. अत्र व्याख्याने मातृकायां एकपत्रपरिमितग्रन्थलोपः ।

नाभिधानीयः, तावत्पचेदित्यनेन स्वार्थो नाभिधीयत इति परस्पराश्रयप्रसङ्गः; पदार्थस्वरूपाभिधानपूर्वके तु तद्वदन्वितार्थाभिधाने द्विरभिधानमप्रामाणिकमनुपपद्यमानमापद्येत। न च पदजातं प्रथममर्थजातं स्वरूपेणानभिदधदेव यथास्वमभिधेयानि *साहचर्यमात्रादर्थरूपाणि स्मारयति, अथैतान्यन्वितान्यभिधत्त इति साम्प्रतम्। यतः—

पूर्वानुभवयोनित्वात्स्मृतिस्तदनुसारिणी।
स[1] चान्विते न स्वरूपे ततोऽपेक्ष्यानपेक्षणम्॥

न खलु पदं पदार्थमात्रे क्वचिदपि दृष्टचरप्रयोगम्[2],

---

**न च पदजातं ........ अभिधत्त इति साम्प्रतम्॥ नेति॥** साम्प्रतमिति सम्बन्धः। मध्यमग्रन्थेनेयमाशङ्का दर्शिता—ननु नावश्यमभिधानसन्निहितेनैवार्थेनान्वितं शब्दानामभिधेयम्, यतोऽयं दोषः स्यात्, सन्निधिमात्रस्य तदुपलक्षणत्वात्। सन्निधेश्चान्तरेणाभिधानं स्मृत्यापि सम्भवात्। सर्वाणि हि पदानि प्राक्प्रतियोगिसन्निधेर्निमित्तभूतमर्थरूपं स्मारयन्ति। ततो न्यायावधारितवचनव्यक्तिनिपाताद्वाक्यार्थमभिदधतीति न कश्चिद्दोष इति। **प्रथममिति॥** श्रवणवेलायामित्यर्थः। **अनभिदधदेवेति॥** प्रतियोग्यसन्निधानादिति भावः। **साहचर्यमात्रादिति॥** न तु शब्दशक्त्येति। **स्मारयतीति॥** स्मरणादभिधानमर्थान्तरमेवेति भावः। कारणमाह—

**पूर्वानुभवयोनित्वात्स्मृतिस्तदनुसारिणी।**
**स चान्विते न स्वरूपे ततोऽपेक्ष्यानपेक्षणम्॥** इति।

कारिकां व्याचष्टे—**न खलु पदं पदार्थमात्रे क्वचिदपि दृष्टचरप्रयोगम्॥** अनेन, श्लोके 'सः' इत्यनेनानुभवः परामृश्यते, तस्य च

---

* (साहचर्यमात्रात्)—'साहचर्यादिति ३ पु. पाठः' इति टिप्पणी।

१. 'सा चान्वितस्वरूपेण ततोऽपेक्षानपेक्षणा' इति मु. पु. पाठः। 'सा चान्वितेन रूपेण ततोऽनपेक्षणम्' इति ३ पु. पाठः। 'अपेक्ष्यमाणस्य आकांक्ष्यमाणस्यार्थान्तरस्यानपेक्षणा जिज्ञासाभाव इत्यर्थः। तथैवोपपादयिष्यति' इति टिप्पणी।

२. 'दृष्टचरं' इति मु.पु. पाठः। 'दृष्टचरप्रयोगमिति ३ पु. पाठः' इति टिप्पणी।

येन[1] तन्मात्रं स्मारयेत्, तन्मात्रेण व्यवहारायोगात्, तत्प्रयुक्तत्वाच्च तदुच्चारणस्य; अपि त्वन्विते स्वार्थे । तथा च गामानयेत्यत्रानयनान्वितस्वार्थो गोशब्दः तेन सहचरितो[2] गां पश्येत्यत्र[3] तदन्वितामेव गां स्मारयेन्न तन्मात्रम् । तथा च तन्निराकाङ्क्षो गौर्न पश्येत्यनेनान्वियात् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थं[4] पश्यपदं तन्निराकाङ्क्षं

---

स्वरूपाविषयत्वे तत्कारणस्य प्रयोगस्य तदविषयत्वं कारणमिति दर्शितमित्यवगन्तव्यम् । एवं हेतुं स्वरूपेणोक्त्वा यदि कचिद्दृष्टचरं स्यात्, किन्ततः, अत आह—**येन तन्मात्रं स्मारयेत्** ॥ पदार्थमात्र प्रयोगादर्शने कारणमाह—**तन्मात्रेण व्यवहारायोगात्** ॥ अंशत्रयविशिष्टभावनाविषयत्वात् प्रवृत्तेरिति भावः । ततः किमित्याह—**तत्प्रयुक्तत्वाच्च तदुच्चारणस्य** ॥ तच्छब्दाभ्यां यथाक्रमं व्यवहारः पदं च परामृश्यते । अनेन च पदोच्चारणस्य व्याप्यत्वं व्यवहारस्य च व्यापकत्वं दर्शितं वेदितव्यम् । क तर्हि दृष्टचरप्रयोगम्? विशिष्टायां भावनायां इत्याह—**अपि त्वन्विते स्वार्थे** ॥ अयमर्थः—क्रियान्वितेषु कारकेषु तदन्वितायाञ्च क्रियायां यथायोगं पदं दृष्टचरप्रयोगमिति । अनेन च '**स चान्विते**' इत्ययमंशो व्याख्यातः । सम्प्रति चतुर्थपादं व्याचष्टे—**तथा च गामानयेत्यत्र ......... न तन्मात्रम्** ॥ **तथा चेति** ॥ अन्वित एव पदप्रयोगे सतीत्यर्थः । आद्याभ्यां तच्छब्दाभ्यां आनयनं परामृश्यते, अन्त्येन गौः । **सहचरित** इति । साहचर्यमात्रादिति ह्युक्तमिति भावः । ततः किमित्याह—**तथा च ...... नान्वियात्** ॥ **तथा चेति** ॥ आनयनान्वितस्मरणे सतीत्यर्थः । तच्छब्देनानयनमेव परामृश्यते । एवं नामपदमूरीकृत्योक्तम्; आख्यातपदमूरीकृत्याह— **एवं प्रासादं पश्येत्यत्र** ........

---

१. 'येन तत्साहचर्येण तन्मात्रं ... अपि त्वान्वितस्वार्थे' इति मु. पु. पाठः ।
२. 'सहोच्चरितः' इति मु. पु. पाठः । ३. 'अत्रापि' इति मु. पु. पाठः ।
४. 'प्रासादान्वितं पश्येति पदं' इति मु. पु. पाठः ।

न गवा सम्बध्यते इति सर्वपदार्थप्रत्ययो[1] दत्तजलाञ्जलिः प्रसज्येत । न चाव्यभिचाराद्गामिति पदं स्वार्थमेव स्मारयति न तु पदान्तरार्थं[2], व्यभिचारादिति साम्प्रतम् । पट्वभ्यासाहिता[3] हि भावना प्रबोधवती स्मृतिः[4] सञ्ज्ञीयते ।

---

**न गवा सम्बध्यते** ॥ एवं—गोपदवदित्यर्थः । तच्छब्देन प्रासादपरामर्शः । **न गवेति** ॥ गां पश्येति सन्निहितेनेति । अत्र च गां पश्येति वाक्यमुदाहरणम् । गामानय प्रासादं पश्येति चान्यसाहचर्यप्रदर्शनायोपात्तमिति वेदितव्यम् । एवं चतुर्थपादं व्याख्याय तत्फलं दर्शयति—**इति सर्वपदार्थप्रत्ययो दत्तजलाञ्जलिः प्रसज्येत** ॥ इतिशब्दः प्रकारे । **गां पश्येति**वदन्यत्रापि दर्शयितव्यमिति भावः । हेतौ वा । सम्प्रति प्रकारान्तरमाशङ्क्य परिहरन्नाह—**न चाव्यभिचारात्** ......... **साम्प्रतम्** ॥ इदमाकूतम्—अव्यभिचारादेव हि स्वार्थत्वं व्यभिचाराच्च पदान्तरार्थत्वमिति स्वार्थत्वपदान्तरार्थत्वसिद्ध्या तद्व्यापकयोरव्यभिचारव्यभिचारयोरपि सिद्धिः । न चानैकान्तिको हेतुरर्थं प्रतिपादयतीति । कारणमाह—**पट्वभ्यासाहिता** ...... **सञ्ज्ञीयते** ॥ अभ्यासशब्देनानुभवपौनःपुन्यमुच्यते । अस्फुटाभ्यासस्य वस्तुविशेषविषयसंस्कारजनकत्वासम्भवात्पटुताप्यभ्यासस्यापेक्ष्यतामित्यभिप्रायेणोक्तम्—**पट्विति** ॥ स्थिराया भावनायाः स्वरूपतः कादाचित्कीं स्मृतिं प्रति हेतुत्वायोगात्तदुपपत्तये तदानीन्तनप्रबोधयोगित्वमप्यपेक्षणीयमिति दर्शितम्—**प्रबोधवतीति** ॥ **सञ्ज्ञीयत इति** ॥ परीक्षकैरिति सिद्ध्यति । समा परीक्षकाविवादं दर्शयति । इदमाकूतम्—

स्मृतावव्यभिचारस्ते कथङ्कारमपेक्ष्यताम् ।
न तावत्करणत्वेन भावनायास्ततः स्थितेः ॥

---

१. 'सम्बध्येतेति सर्वत्र वाक्यार्थो दत्त' इति मु. पु. पाठः । 'वाक्यार्थप्रत्यय इति ३ पु. पाठः' इति टिप्पणी ।

२. 'पदार्थान्तरं' इति मु. पु. पाठः ।

३. 'पट्वभ्यासादरप्रत्ययाहिता भावना' इति मु. पु. पाठः ।

४. 'स्मृतिहेतुः' इति मु. पु. पाठः ।

तस्याश्च प्रबोधः प्रणिधानादिजन्मा नाव्यभिचार *एवा-

सहकारितया नापि प्रबोधो हि तथा स्थितः ।
स्वरूपोत्पत्तये नास्या अभ्यासाधीनता स्थितः ॥
अभ्यासे सहकारित्वं पटुत्वस्यैव सम्मतम् ।
इयती स्मृतिसामग्री सम्मता न्यायवादिनाम् ॥
न चात्राव्यभिचारोऽपि कारणं व्यभिचारतः ।
उपाध्यायेन शिष्यस्य स्मृतेर्याज्येन चर्त्विजाम् ॥ इति ॥

न चाव्यभिचारस्य प्रकारान्तरेणापि स्मृत्युत्पत्तावुपयोग इत्यभिप्रायेणाह—तस्याश्च प्रबोधः . . . . . . एव(।)यतते ॥ अयमर्थः—नाव्यभिचारस्यैवासाधारणं प्रबोधहेतुत्वम्, किन्तु प्रणिधानादिवत्सोऽपि कचित्प्रबोधहेतुतामनुभवतीति । अथवा—प्रणिधानादिजन्मत्वान्नाव्यभिचार एवायतत इति योजना । इदमाकूतम्—

पटुत्वाभ्याससंस्कारप्रबोधेष्वस्य हेतुता ।
नैकं प्रत्यपि वक्तव्या यतोऽभ्यासे दृगादयः ॥
प्रसिद्धा हेतुभावेन तत्पौष्कल्यात्पटुश्च सः ।
भावनाहेतुरभ्यासः प्रबोधोऽस्यास्ततो यदि ॥
सोऽप्यस्तु कचिदेतस्याः प्रबोधं प्रति कारणम् ।
बहवोऽन्येऽपि सन्त्येव तद्बोधं प्रति हेतवः ॥
ते चोपरिष्टाद्वक्ष्यन्ते तेष्वेषोऽन्तर्गतः परम् । इति ॥

ननु साहचर्यमात्रात्संस्कारोन्मेषः सिद्ध्यतीति त्वयेष्यते ; न च साहचर्यं प्रणिधानादिषु पठ्यते ; न च साहचर्यमात्रं विशेषविषयसंस्कारोद्बोधकारणम्, बहुसाधारणस्य विशिष्टसंस्कारोद्बोधहेतुत्वायोगात् ; अतो विशिष्टविषयसंस्कारोद्बोधः साहचर्यं च परस्परेण विरुद्ध्यते, उभयोरुभयविपर्ययव्याप्तत्वात् । तथा हि—साहचर्यं

---

१. 'जन्माऽव्यभिचार एव नायतते' इति मु. पु. पाठः ।
* 'अव्यभिचारे सत्येव स्मृतिजनक इति नियमो नास्तीत्यर्थः' इति टिप्पणी ।

यतते । साहचर्यमात्रस्यापि तु सम्बन्धरूपेण प्रणिधानादि-गणपाठादुपपत्तेश्च तद्बोधो न विरुध्यते । तच्च स्वार्थस्यैव पदार्थान्तरस्याप्यस्तीति पदान्तरार्थसहितमेव स्वार्थमना-

---

गवादीनां पश्यत्यादिसाधारणं साधारण्यामेव स्मृतावुपयुज्यते । विशिष्टसंस्कारोद्बोधश्चाव्यभिचारिणा साध्य इति विरोधः, अत आह—**साहचर्यमात्रस्यापि तु ......... न विरुध्यते** ॥ उपरिष्टात्स्वयमेव **निबन्धनकृता** प्रणिधानादिगणपाठ उदाह्रियते । तत्र यद्यपि साहचर्य-मात्रस्य पाठो नास्ति तथापि सम्बन्धेति सम्बन्धस्य पाठात्साहचर्य-मात्रस्य सम्बन्धत्वाविशेषात्सम्बन्धरूपेण पाठोऽस्त्येव । यदि च संस्कारोद्बोधकत्वं साहचर्यमात्रस्य नोपपद्येत, ततः सम्बन्धरूपेण गणपाठो नाश्रीयेतापि । न च तदप्यस्ति । साहचर्यमात्रेणापि शिष्यो-पाध्यायादौ स्मृतिदर्शनान्न हेतुसाध्ययोर्विरोध इति । **मात्रशब्देनाव्यभि-चारं व्यवच्छिनत्ति । अपिशब्देनाव्यभिचारं** प्रणिधानादिकं कृत्स्नमेव वा समुच्चिनोति । **तुशब्दः** किन्त्वित्यपेक्षाद्योतनार्थम् । '**तद्बोधः**' इति तच्छब्देन भावनां परामृशति । '**साहचर्यमात्रस्य**' इति षष्ठ्याः '**पाठात्**' इत्यादिकेन सम्बन्धः । ततस्तद्बोध इति ततश्शब्दो द्रष्टव्यः । अस्तु साहचर्यमात्रेणापि स्मृतिः, तथापि गां पश्येत्यत्र गामिति पदं स्वार्थमात्रं तावत्स्मारयति । तथा पश्येति पदमपि स्वार्थमात्रम्, ततो झटित्येव पदद्वयमन्योन्यार्थान्वितं स्वार्थमभिधत्ते इति कुतः साहचर्यमात्रस्यापि स्मारकत्वं प्रतिषिध्यते ; अत आह—**तच्च स्वार्थस्यैव ............... तपस्विनी** ॥ **तत्**—साहचर्य-मात्रम् । एतच्च 'स चान्विते न स्वरूपे ततोऽपेक्ष्यानपेक्षणम्' इत्यस्य यद्व्याख्यानं '**तथा च**' इत्यादिक(कं, त)स्य संक्षेप इत्यवसातव्यम् ।

---

१. 'साहचर्यमात्रमस्याप्यस्तीति पदार्थान्तरसहितमेव' इति मु. पु. पाठः । 'साहचर्यमात्रस्यापि च सम्बन्धतया प्रणिधानादिगणे पाठाद्युपपत्तेश्च तदुद्बोधहेतुभावो न विरुध्यते । तच्च स्वार्थस्यैव पदार्थान्तरस्याप्यस्तीति ३ पु. अधिकः पाठः' इति टिप्पणी ।

२. 'स्वार्थमनाकाङ्क्षं स्मारयेदिति हता बत वाक्यार्थधीः' इति मु. पु. पाठः ।

काङ्क्षितं सहसैव स्मारयेदिति हता वाक्यार्थधीस्तपस्विनीति पदानामर्थस्वरूपमात्रमेपितव्यम् । तथा च तेऽर्थाः क्रियादयः स्वसामर्थ्येन स्वरूपमात्रेण पदैरभिहिता विना कारकादिभिरपर्यवस्यन्तस्तदाकाङ्क्षायोग्यतासंत्तिसहकारिणो वाक्यबाह्यार्थ(क्यार्थ)धियमादधतीति युक्तम् ॥

---

अनाकाङ्क्षितम्—आकाङ्क्षारहितमित्यर्थः । अनाकाङ्क्षमिति वा पाठः । अनाकाङ्क्षमिति पाठे पदस्य शब्दताविवक्षया पुल्लिङ्गनिर्देशः । अनाकाङ्क्षदित्येव वा पाठः । अनाकाङ्क्षितमिति पाठेऽपीतरेणानाकाङ्क्षितम्, इतरस्याप्येवंविधत्वादिति वा योजना । सर्वथा 'ततोऽपेक्ष्यानपेक्षणम्' इत्यस्य सङ्क्षेपः । सहसैवेति ॥ पदान्तरप्रतीक्षणात्प्रागेवेति । तपस्विनीति शोचनीयतानिर्देशेन निष्प्रतीकारतां दर्शयति । एवञ्चान्विताभिधानात्प्रागेव पदैः पदार्थस्य स्वरूपमात्रस्य स्मृतिमुक्त्वाऽभिधानतयै(त ए)व सन्निधे(धि)रेपितव्य इत्याह—इति पदानां...एपितव्यम् ॥ भवतु तथापि प्रथमं तावत्केवलाभिधानम्, पश्चादन्विताभिधानमस्तु, अत आह—तथा च तेऽर्थाः ...... आदधतीति युक्तम् ॥ तथा—स्वरूपमात्रस्यैषितव्यत्वे सतीत्यर्थः । तेऽर्थाः—व्युत्पत्तिप्रसिद्धाः । स्वसामर्थ्येन—पदानां यथास्वमवस्थितेन सामर्थ्येन । स्वरूपमात्रेण—क्रियादिस्वरूपमात्रेण । मात्रशब्देनान्वितावस्थां व्यवच्छिनत्ति । तदाकाङ्क्षेति ॥ तच्छब्देन कारकादेः परामर्श इति । युक्तमिति ॥ 'अनन्यलभ्यः शब्दार्थः' इति न्यायादिति भावः । अनेन च 'ननु पदान्तरस्य वैयर्थ्यम्' इत्यादिकं सिद्धान्तिनश्चोद्यमिति दर्शितमिति वेदितव्यम् ॥

---

१. 'अर्थरूपमात्राभिधानमेषितव्यम्' इति मु. पु. पाठः ।
२. 'ते ते पदार्थाः' इति मु. पु. पाठः ।
३. 'कारणादिभिः' इति मु. पु. पाठः ।
४. 'योग्यतासन्निधिसह' इति मु. पु. पाठः ।
५. 'वाक्यार्थधियं' इति मु. पु. पाठः ।

अत्रोच्यते—

विधान्तरानवगमात्स्मृतिलक्षणयोगतः ।
अभ्यासातिशयाद्रूपस्मृतेर्नान्योन्यसंश्रयः ॥

इदं भवानपि निरूपयतु प्रमाणसंशयविपर्ययस्मृतिषु कतमेयं पदात्पदार्थप्रतिपत्तिरिति । तत्र न तावत्प्रमाणमनधिगतार्थबोधनं तदुपेयते । यथाहुः—

'सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा' इति ।

न च पदात्पदार्थधीरनधिगतार्थगोचरा । न खलु सम्बन्धसंवेदनसमये समधिगतोऽर्थः पदैरभिधीयमानो देशकालावस्थाविशेषेणाप्यतिरिच्यते । अनतिरिच्यमानश्च न स्वरूपे विज्ञानं प्रमाणयति । अत एवाहुः—

'परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ।
प्रमितेऽनुप्रयुक्तत्वात्स्मृतेर्नास्ति प्रमाणता ॥' इति ।
'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ।' इति च ।

---

अन्विताभिधानवादी परिहरति—अत्रोच्यते—

विधान्तरानवगमात्स्मृतिलक्षणयोगतः ।
अभ्यासातिशयाद्रूपस्मृतिर्नान्योन्यसंश्रयः ॥

कारिकां व्याख्यातुं पीठिकां दर्शयति—इदं भवानपि निरूपय(तु)

---

१. 'नान्योन्यसंश्रयम्' इति मु. पु. पाठः ।

२. 'इदं तावन्निरूपयतु भवान्' इति मु. पु. पाठः ।

३. 'प्रमाणसंशय' इत्यारभ्य 'तुल्यो दोषः' इति पर्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् ।

४. 'श्लोकवार्तिके वृत्तिकारग्रन्थे श्लोकः ११.' इति टिप्पणी ।

* (अनुप्रयुक्तत्वात्)—'तु प्रयुक्तत्वादिति ३ पु. पाठः' इति टिप्पणी ।

५. श्लोकवार्तिके शब्दवादे श्लोकः १०२, १०५.

६. अत्र व्याख्याने पत्रद्वयपरिमितग्रन्थलोपः ।

न हि पदस्य प्रणिधानादिभ्यः संस्कारोद्बोधहेतुभ्यः कश्चिद्विशेषः । संशयविपर्ययहेतुभावस्तु पदस्येति स्थवीयः । न च पञ्चमी विधा समस्तीति स्मृतिः परिशिष्यते । सा चान्वितगोचरा न स्वरूपगोचरेति तुल्यो दोषः । अभिधानतः स्मारितं वाक्यार्थान्वयि न साहचर्यमात्रादिति चेत्—कुतस्तर्हि गङ्गायां घोषः प्रतिवसतीत्यादौ तीरादीनामनभिधेयानां प्रतिवासान्वयः । अपिच, अभिधानतः स्मारितस्य[1] स्वरूपमात्रस्य साहचर्यस्मारितेनेवार्थान्तरेणाकाङ्क्षोपरतेरनाकाङ्क्षस्य *चरमप्रतीतेनाभिधानतोऽर्थान्तरेण सङ्गमायोगात्समुत्पन्नसङ्कटो वाक्यार्थः प्रतिपद्यते इति

...... (अभिहितान्वय) वादी अतुल्यत्वं दर्शयन्नाह—अभिधानतः ...... साहचर्यमात्रादिति चेत् ॥ इदमाकूतम्—यदि वयं यूयमिव साहचर्यमात्रात्स्मारितैः कारकादिभिः साहचर्यमात्रात्स्मारितानां क्रियादीनामन्वयमाचक्ष्महे ततः तुल्यदोषतया पर्यनुयोज्येमहि । न त्वेवमस्माभिरुच्यते, किन्त्वभिधानतः स्मारितं वस्तु वाक्यार्थान्वयीति ब्रूमहे इति कथं तुल्यदोषतेति । अन्विताभिधानवादी परिहरन्नाह—कुतस्तर्हि ...... प्रतिवासान्वयः ॥ 'प्रतिवासान्वयः' इत्येतदुपलक्षणम्, प्रतिवासाद्यन्वय इत्यर्थः । 'इत्यादौ तीरादीनाम्' इत्यत्रादिशब्ददर्शनात् प्रतिवासाद्यन्वय इति पाठः श्रेयान् । एवं 'अभिधानतः स्मारितम्' इत्यस्य व्यभिचारो दर्शितः । किञ्च 'अभिधानतः स्मारितम्' इत्येतदेव न मृष्यामहे इत्याह—अपि चाभिधानतः ...... प्रतिपद्यते ॥ अस्य ग्रन्थस्य 'पूर्वानुभवयोनित्वात्' इत्यारभ्य 'दत्तजलाञ्जलिः प्रसज्येत[2]' इत्यवसानो ग्रन्थो व्याख्ये(यः ?) । (अभिधानतः

---

१. 'स्मारितस्वरूपमात्रस्य' इति मु. पु. पाठः ।

* (चरमप्रतीतेनाभिधानतः) — 'पदान्तरसमभिव्याहारोत्तरमुद्बुद्धयाऽभिधया पश्चादुपस्थितेनेत्यर्थः' इति टिप्पणी ।

२. 'प्रसज्येत' इति मु. पु. पाठः ।

कुतस्तद्भावना, कुतस्तरां च पदैरुद्बोधः, कुतस्तमाञ्च तदन्वयस्मरणं इत्यकामेनाप्यनन्वितस्मरणमभ्युपेयम् ।

चरम)प्रतीतेन' इत्यन्वयः ?। समुत्पन्नसङ्कट इति। सङ्कटशब्देन विनाशो विवक्षितः । कचित्तु समुच्छिन्नसङ्कथ इति पाठः । युष्माभिरेवमापादितत्वादिति भावः । एवं त्व(या) पदानामर्थस्वरूपमेषितव्यमित्यादि यदुक्तं, तदपि मुधैवेत्याह—इति कुतस्तद्भावना ॥ तच्छब्देन वाक्यार्थः परामृश्यते । वाक्यार्थस्यैवाभावे कथन्तदनुभवजन्यः संस्कार इत्यर्थः । वाक्यार्थबोधेनैव हि पदपदार्थसम्बन्धो गृह्यते, ततः पदार्थानुभवजन्यः संस्कार इति वाक्यार्थसंस्कार एव पदार्थसंस्कार इति संस्काराभावे तदुद्बोधो दूरापास्त इत्याह—कुतस्तराञ्च पदैरुद्बोधः ॥ भावनाया इति सिद्ध्यति । तथा पदार्थानां वाक्यार्थान्वयस्य कृते स्मरणमपीत्याह—कुतस्तमां च तदन्वयस्मरणम् ॥ तदन्वयस्मरणं वाक्यार्थान्वयाय, तस्य कृते वा पदार्थानां स्मरणमिति । अथवा—एवञ्च कथमिव त्वयास्मान्प्रति 'पूर्वानुभवयोनित्वात्' इत्यादिकमापाद्यते, त्वदुक्तेन प्रकारेण साहचर्यमात्रस्मारितेनैवार्थान्तरेणान्वये सति श्रुतयोरनन्वयाद्वाक्यार्थोच्छेदात्कुतो वाक्यार्थविषयस्संस्कारः, अनुभवस्यैव तद्विषयस्याभावात्, कारणासम्भवे कार्यासम्भवात् । पुनश्च, गामानयेत्यत्र वाक्यार्थानुभवाभावेन तज्जन्यसंस्काराभावे, तथा प्रासादं पश्येत्यत्र संस्काराभावे, गां पश्येत्यत्रोभयवाक्यार्थाभावेन कुतस्तरां पदैरुद्बोधः, उद्बोधविषयस्याभावात् । पूर्वं कारणाभाव एव ; सम्प्रति विषयरूपस्य कारणस्य न केवलमभावः तत्कारणस्यापीति तरप् प्रयुक्तः, पुनश्च, उभयवाक्यार्थगतस्यान्वयस्य स्मरणं, पश्येतिपदेन प्रासादान्वयस्य गामिति पदेनानयनान्वितस्य स्मरणं दूरापास्तम्, प्रपितामहस्थानीयस्य कारणस्याप्यभावात्तमप्प्रयुक्तः । एवं 'स्मृतिलक्षणयोगतः' इत्यस्य दोषतोद्भाविता। सम्प्रति तस्य साध्यान्वयं दर्शयति—इत्यकामेनाप्यनन्वितस्मरणमभ्युपेयम् ॥ अकामेनेति ॥ अनिच्छयेत्यर्थः । अथवा

१. 'अन्वयिस्मरणम्' इति मु. पु. पाठः। 'अन्वितस्मरणमिति ३ पु. पाठः' इति टिप्पणी ।

**आतश्चैतदेवं यदभ्यासातिशयः संस्कारातिशयमाधत्ते । स च द्रागित्येव प्रबुद्ध एकपदे स्फुटतरं स्मरणमुपजनयति । *दर्शनमात्रजन्मा पुनर्मन्दो विलम्बितप्रबोधो मन्दमेव**

---

अकामेन सतापि भवता इत्यर्थः । '**अनन्वितस्मरणम्**' इति '**रूपस्मृतेः**' इत्यस्य व्याख्या । '**अभ्यासातिशयात्**' इत्येतत्त्रैव हेत्वन्तरमिति दर्शयन्नाह—**आतश्चैतदेवम्** ॥ **आतश्चेति** ॥ अस्मादपि कारणादित्यर्थः । यथोक्तं वैजयन्त्याम्—'आतो निन्दाहेतुचित्रेषु' इति । **एतदिति** ॥ स्मरणमित्यर्थः । **एवमिति** ॥ अनन्वितविषयमित्यर्थः । कचित्तु एवमित्यस्य स्थाने एवकारो दृश्यते । तदा '**एतत्**' इत्यस्यानन्वितविषयं स्मरणमित्यर्थः । पूर्वपाठेऽपि वाऽनन्वितविषयं स्मरणमेतच्छब्देन परामृश्यते । '**एवम्**' इत्यनेन तु अभ्युपेयमित्येतदिति व्याख्या । '**आतः**' इति निर्दिष्टं हेतुमेव दर्शयति—**यदभ्यासातिशयः संस्कारातिशयमाधत्ते** ॥ इन्धनातिशय इवाग्न्यतिशयमिति भावः । ततस्ततः, अत आह—**स च द्रागित्येव . . . . . . स्मरणमुपजनयति** ॥ **सः**—संस्कारातिशयः । **द्रागित्येव**—झटित्येव । **प्रबुद्धः**—उन्मिषितः । **एकपदे**—एकस्मिन्नेव स्थाने । यस्मिन्नवसरे उद्बोधकप्राप्तिः तस्मिन्नेवोद्बोधः कार्यजननञ्चेति । यदेन्धनातिशयो योजितः तदैवाग्नीन्धनसंयोगः, तदैव च ज्वलनम् । यद्येवं ततस्ततः, अत आह—**दर्शनमात्रजन्मा . . . . . . उत्सहते** ॥ मात्रशब्देनाभ्यासव्यावृत्तिः । **मन्दः**—अनतिशयानः । **विलम्बितप्रबोध इति** ॥ विलम्बितः प्रबोधो यस्येति बहुव्रीहिः । न द्रागित्येव वा प्रबुद्ध इति । अत्र च संस्कार इति सिद्ध्यति । **मन्दमेव**—न स्फुटतरम् । **कार्यम्**—स्मरणम्; यथा—आर्द्रेन्धनसंयोजनायां विलम्बेनाग्नीन्धनसंयोगः विलम्बेन ज्वलनमिति । अस्तु संस्कारातिशयस्य स्फुटतरस्मरणजनकत्वमेकपद एव । अस्तु च मन्दस्य मन्दस्मरणहेतुत्वम्, इह तु यथा पदस्य

---

१. 'इतश्च' इति मु. पु. पाठः ।

* (दर्शनमात्रजन्मा)—'तत्सहितार्थान्तरसाहचर्यदर्शनजन्य इत्यर्थः । स्वार्थेन सङ्गतिग्रहो भूयानर्थान्तरेण तु प्रयोगभेदेनानियतत्वान्न तथेति भावः' इति टिप्पणी ।

२. 'विप्रलम्बितप्रबोधो' इति मु. पु. पाठः ।

कार्यमाधातुमुत्सहते । अभ्यासवती च पदस्य स्वार्थेन साहचर्यानुभूतिर्यथा न तथाऽर्थान्तरेण । अन्वयेऽभ्यासवत्यप्यर्थान्तरेषु तेष्वनभ्यासात्तद्रूपनिरूपणत्वाच्चान्वयस्यानभ्यास एव । तथा च स्मृतिसन्निहिताः स्वरूपमात्रेणार्थान्तराकाङ्क्षाः पदैरन्विता अभिधीयन्ते इति न परस्पराश्रयः ।

स्वार्थेन सह साहचर्यानुभूतिरभ्यासवती, तथार्थान्तरेणापि साहचर्यानुभूतिरभ्यासवत्येव, अन्वितविषयत्वादनुभूतेरित्याशङ्क्याह—**अभ्यासवती च ......... अर्थान्तरेण** ॥ **यथा**—यादृशी । **तथा**—तादृशी । **अर्थान्तरेण**—साहचर्यानुभूतिरभ्यासवतीति सिद्ध्यति । **'स चान्विते न स्वरूपे'** इत्येतत्परिहरन्नाह—**अन्वय इति** ॥ **अभ्यासवत्यपि ...... अनभ्यास एव** ॥ इदमाकूतम्—सत्यं अन्वितावस्था अभ्यासवती, तथापि यादृशी पदस्य स्वरूपमात्रेण साहचर्यानुभूतिर्न तादृशी अर्थान्तरेणान्वितावस्था अभ्यासवती । ननु अन्वयोऽर्थान्तरैः स्वरूपमात्रस्य ; तथा च स्वरूपवदन्वयस्यार्थान्तराणाञ्चाभ्यासवत्त्वमिति चेन्न ; अतुल्यत्वात् । सत्यं स्वरूपवदेवान्वयस्यापि पदार्थान्तरेषु स्वरूपान्वयिषु तत्र तत्राभ्यासोऽस्त्येव, तथापि तेष्वर्थान्तरेष्वनभ्यासात्, पदार्थान्तराणां तत्र व्यभिचारेण तेष्वभ्यासस्य तथैवानुदयात्, तद्रूपनिरूपणत्वाच्च अन्वयस्य, सम्बन्धस्य सम्बन्ध्यधीननिरूपणत्वात् फलतोऽनभ्यास एवान्वयस्यपद्यत इति ॥

एवमभ्यासातिशयो व्याख्यातः । सम्प्रति श्लोकशेषं व्याचष्टे—**तथा च स्मृतिसन्निहिताः ... परस्पराश्रयः** ॥ अत्र 'स्वरूपमात्रेण' 'स्मृतिसन्निहिताः' इत्यन्वयः । **स्मृति**शब्देनाभिधानं व्यवच्छिनत्ति । अत एवार्थान्तराकाङ्क्षा इति । एतदेव साधयितुं **'ततोऽपेक्ष्यानपेक्षणम्'**

---

१. 'तद्रूपणाच्च' इति मु. पु. पाठः । 'तद्रूपनिराकरणत्वादिति ३ पु. पाठः' इति टिप्पणी ।

२. 'स्मृतिसन्निहितस्वरूपमात्रेण अर्थाः अर्थान्तराकाङ्क्षाः' इति मु. पु. पाठः ।

३. 'परस्पराश्रयम्' इति मु. पु. पाठः ।

नाप्यनाकाङ्क्षता, आकाङ्क्षा च प्रतिपत्तुर्जिज्ञासा । सा च क्वचिदभिधानापर्यवसानाद्भवति ; यथा—'द्वारम्' इति । न ह्यत्र प्रकृत्यर्थातिरिक्ते प्रत्ययार्थे प्रतीतिरस्ति, येनान्वितः

इत्यपाकुर्वन्नाह—नाप्यनाकाङ्क्षता ॥ अत्र पदानामिति सिद्धवत्ः स्वरूपमात्रेण झगित्येव पदार्थान्तरेभ्यः प्रागेव श्रुतानामेवान्विताभिधानमर्पयत्करमिति भावः । अनाकाङ्क्षताभावे हेत्वन्तरमाह—आकाङ्क्षा च प्रतिपत्तुर्जिज्ञासा ॥ इदमाकूतम्—यदि पदानामेव चेतनत्वेनाकाङ्क्षा स्यात्, तदा येन येन तेषां साहचर्यमासीत् तेन तेनान्विताभिधानमाशङ्क्येत वा, न वा । परमार्थतस्तु प्रतिपत्तुर्जिज्ञासैव आकाङ्क्षा ज्ञानेच्छैव, नाकाङ्क्षामात्रम् ; नापि शब्दस्य ; नापि वक्तुः । तथा च प्रतिपत्तारं झटित्येव पदानि श्रुत्वा अभ्यासातिशयात्स्मारितानामर्थमात्राणामाकाङ्क्षासन्निधियोग्यतासमीक्षया तदन्वयोन्मुखं प्रति पदानामन्विताभिधानं सेत्स्यतीति । यदि 'आकाङ्क्षा हि' इति पाठः, तदा साकाङ्क्षतामेव प्रतिपादयति, 'आकाङ्क्षा हि प्रतिपत्तुर्जिज्ञासा' ; सा च तदानीमुपक्रान्तैव नोपरतेति भावः । एवं प्रतिपत्तुरेव जिज्ञासा पदानामाकाङ्क्षा ; श्रोतारं प्रति च पदानां तुल्यत्वात्समभिव्याहारमनतिक्रम्य तेषामेव सोऽन्योन्यस्मा( रित ? )पदार्थान्तरान्वितस्वार्थाभिधानमध्यवस्यति, न त्वश्रुतपदार्थान्तरान्विताभिधानं मृष्यत इत्युक्तम् । 'अभ्यासाति(शयाद्रूप)स्मृतेः' इति चाभिधानात्पदस्मारितार्थान्तरान्वितस्वार्थाभिधानं सार्वत्रिकमिव प्रतीयते । न चै(तद्युक्तम्, यतः ? ) कदाचिदन्विताभिधानमश्रुतेनाप्यर्थेन श्रुतस्य पदस्य भवति । तत्र च प्रतिपत्तुर्जिज्ञासा नामाकाङ्क्षैव निमित्त (?) ... । (सा च) क्वचित् ......द्वारमिति ॥ क्वचिदिति ॥ वाक्ये । अभिधानापर्यवसानात्, न त्वभिहितार्थापर्यवसानात् (इति भावः) ॥ ननु द्वारमित्यत्रापि संवरणेन वा विवरणेन वा यदन्विताभिधानं तदप्यभिहितार्थापर्यवसानादेव (भवति ?), प्रकृत्युपात्तस्यार्थस्यार्थान्तरेण प्रत्ययार्थेनान्विताभिधानात् ; अत आह—न ह्यत्र प्रकृत्यर्था .....प्रतीतिरस्ति ॥ प्रकृत्यर्थातिरिक्त इति ॥ प्रकृत्यर्थव्यतिरेको

१. 'यथा दारा इति' इति मु. पु. पाठः । २. 'प्रकृत्यर्थादतिरिक्ते' इति मु. पु. पाठः ।

प्रकृत्या स्वार्थोऽभि[1]धीयते, प्रातिपदिकार्थमात्रे *प्रथमोत्पत्तेः। तदत्रा[2]भिधानपर्यवसानाय प्रतिपत्ता पदार्थान्तरं स्मारितान्वययोग्यं जिज्ञासते। क्वचिच्च अभिहितार्थापर्यवसानात्; यथा—'विश्वजिता यजेत' इति। इह हि †कार्यस्य विषयकरणान्वितस्याभिधानं पर्यवसितम्, न पर्यवस्य[3]ति हि

हि प्रत्ययार्थलक्षणमिति भावः। यद्यस्ति (ततः किम्? अत?) आह—**येनान्वितः प्रकृत्या स्वार्थोऽभिधीयते**॥ **येन**—प्रत्ययार्थेन। पुनश्चाभिहितापर्यवसानं स्यात् (?) . . . '**न प्रतीतिरस्ति**' इत्यत्र कारणमाह—**प्रातिपदिकार्थमात्रे प्रथमोत्पत्तेः**॥ लिङ्गसङ्ख्ययोस्तु न प्रकृत्यर्थातिरेक इति भावः। यद्यपि तयोरपि प्रकृत्यर्थातिरेको विद्यते तथापि ताभ्यामन्विताभिधानस्यासाधारणत्वेन प्रयोजना(नत्वा?)भावात्कारकेणान्विताभिधानस्यैव प्रयोजनत्वान्न कारके प्रकृत्यर्थातिरिक्ते प्रतीतिरस्तीत्युक्तमिति वेदितव्यम्। तथा च नात्राभिहितापर्यवसानम्, किन्त्वभिधानापर्यवसानमेवेत्याह—**तदत्र . . . . . . जिज्ञासते**॥ **स्मारितान्वययोग्यमिति**॥ स्मारितेन द्वारार्थेन योऽन्वयः तद्योग्यमिति। अथवा—द्वारमिति पदेन स्वार्थस्यार्थान्तरेण केनापि योऽन्वयो व्युत्पत्तावव‍धृतः स्मारितस्य तस्यान्वयस्य योग्यमिति। अभिहितापर्यवसानादपि भवत्येवेत्याह—**क्वचिच्चाभिहितार्थापर्यवसानात्**॥ अत्र सा भवतीत्येव सम्बद्ध्यते। क्वचिदित्युक्तमेव दर्शयति—**यथा—'विश्वजिता यजेत' इति**॥ न चात्राप्यभिधानापर्यवसानादेवेति दर्शयन्नाह—**इह हि . . . . . . नियोज्यभेदमन्तरेण**॥ **विषयकरणान्वितस्येति**॥ विषयेण करणेन वा अन्वितस्य। '**विश्वजिता यजेत**' इत्यत्र धातुना विषय उपात्तः। **विश्वजितेति** शब्देन तस्यैव करणत्वमुपात्तम्। ताभ्या-

१. 'अभिधीयेत' इति मु. पु. पाठः।

* (प्रथमोत्पत्तेः)—'प्रत्ययोत्पत्तेरिति ३ पु. पाठः' इति टिप्पणी।

२. 'तदत्रान्विताभिधान' इति मु. पु. पाठः।

† (कार्यस्य)—'कार्यस्येति ३ पु. नास्ति' इति टिप्पणी।

३. 'पर्यवस्यत्यभिहितं कार्यं नियोज्यभेदमन्तरेण' इति मु. पु. पाठः।

तत्कार्यं नियोज्यभेदमन्तरेण; न खलु कार्यमनुष्ठानं विना अवतिष्ठते; तदेव नाकर्तृकम्; न चानधिकृतः कर्ता; न चानियोज्योऽधिकृत *इत्यानुपूर्वी(र्वि)कसिद्धम्। तेनात्रापि तत्पर्यवसानायास्ति तदन्वययोग्यनियोज्यजिज्ञासा॥

ञ्चान्वितस्य कार्यस्याभिधानं कारकत्वेनानुष्ठानोपयोगित्वात्प्रथममेव निर्वहति इत्यभिधानं पर्यवसितम्। न चाभिधानपर्यवसानान्नियोज्ये-नान्विताभिधानासम्भवः। अभिहितविषयकरणाभ्यां अन्वितस्याभि-हितस्य कार्यस्य नियोज्यविशेषण(शेष?)मन्तरेणापर्यवसानात्। एतदेव स्फोरयन्नाह—न खलु कार्यमनुष्ठानं विना अवतिष्ठते॥ कार्यत्वा-देवेति भावः। ततः किम्? इत्याह—तदेव नाकर्तृकम्॥ यत्तु कार्यत्वार्थं कल्पितमनुष्ठानम्, तदेवेत्यर्थः। एवकारस्थाने तुशब्दो वा। न हि कर्तार-मन्तरेणानुष्ठानमेवावतिष्ठते। हेतुमन्तरेण कार्यानिष्पत्तेरिति भावः। ततस्ततः; आह—न चानधिकृतः कर्ता॥ न हि मदभिलषितसाधन-त्वान्मदर्थमिदं कर्मेत्यविज्ञाय बुद्धिपूर्वकारी कर्तृत्वमनुभवतीति भावः। ततोऽपि किम्? अत आह—न चानियोज्योऽधिकृतः॥

'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते।'

कार्यं स्वकीयत्वेन बुद्धवतो हि तद्विषयभूते कर्मण्यधिकारबोधो भवतीति भावः। एतच्च सर्वं पौर्वापर्येण सिद्धमित्याह—इत्यानुपूर्वी(र्वि)कसिद्धम्॥ आनुपूर्वी(र्वि)कम्—आनुपूर्वी। आनुपूर्व्यशब्दादानुपूर्वीशब्दाद्वा विनयादित्वार्थे ठक्। यथोक्तम्—'विनयादिभ्यष्ठक्' इति, तेन सिद्धम्; तत्कार्यानुष्ठानकर्त्रधिकारनियोज्यसमुदायात्मकं पौर्वापर्येण लोके, वेदे च 'स्वर्गकामो यजेत' इत्यादौ प्रसिद्धमित्यर्थः। सामान्यन्यायमुक्त्वा प्रकृतेऽपि योजयति—तेनात्रापि...... जिज्ञासा॥ अत्रापीति॥

१. 'व्यवतिष्ठते। न चाकर्तृकं तत्' इति मु. पु. पाठः।

* (आनुपूर्व्या)—'क्रियायाः सकर्तृकत्वनियमादिष्टसाधनताज्ञानं विना कर्तृत्वा-नुपपत्तेरनुष्ठानमन्तरेण फलासम्भवात्स्वर्गकामः कर्तृत्वेनान्वेतीति भावः' इति टिप्पणी।

२. 'इत्यानुपूर्व्या सिद्धं' इति मु. पु. पाठः।

३. 'तदन्वययोग्ये नियोज्ये जिज्ञासा' इति मु. पु. पाठः।

*न चानन्वितस्वार्थस्मरणमात्रावसितव्यापारेषु पदेषु तदर्था एवाकाङ्क्षादिसहकारिणः करिष्यन्ति वाक्यार्थ-

श्रुतनियोज्यकवाक्यवदित्यर्थः । तच्छब्दाभ्यां विषयकरणान्वितस्याभिहितस्य कार्यस्य परामर्शः । अत्र श्लोकाः—

प्रमाणं वा संशयो वा भ्रान्तिर्वा श्रु(स्मृ ?)तिरेव वा ।
पदार्थधीर्ज्ञानजातिर्विधास्वासु समाप्यते ॥

न तावदेषा प्रमितिवर्गेऽवस्थातुमर्हति ।
स्थिता ह्यनुलब्धेऽर्थे इत्यत्राज्ञातगोचरा ॥

प्रमितिर्नेयमेतादृग्यतः सम्बन्धसंविदः ।
समयेऽधिगतो योऽर्थः पदानां तस्य संप्रति ॥

तैरेव बोध्यमानस्य देशतः कालतोऽपि वा ।
अवस्थया वा पश्यामः किञ्चिदाधिक्यमाहितम् ॥

अनाधिक्यवता शक्या न प्रमेयपदे स्थितिः ।
प्रमेयेन विना ज्ञानं न च प्रामाण्यमश्नुते ॥

किन्तु तत्स्मृतिरेव स्यात्पदजन्यं तु तादृशम् ।
एतच्च वार्तिककृता स्वयमेव समाश्रितम् ॥

"पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ।"
पदस्य वृत्ति(प्रणि ?)धानादेः संस्कारोद्बोधकारणात् ॥

विमृश्यमाने यः कश्चिद्भेदो नास्माभिरीक्ष्यते ।
अवधारणरूपत्वान्न चेयं संशयत्वभाक् ॥

मिथ्येति प्रत्ययो नास्यां न च कारणदुष्टता ।
दृढत्वात्सर्वथा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥

---

* (न चानन्वित...)—'विश्वजिता यजेतेति वाक्येऽश्रुतमपि स्वर्गकाममन्वितमालोच्य सर्वत्र तथैवास्त्वित्याक्षिपति' इति टिप्पणी ।

१. 'न चानन्वितस्वार्थस्मरणमात्रावसितव्यापारेषु' इत्यारभ्य 'कारणत्वं वाक्यार्थप्रत्ययं प्रत्यध्यवस्यामः' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् ।

विधा च पक्षधर्मा कापि न च ज्ञाते समस्ति नः ।
एवञ्चार्थान्वितामेषा स्मृतिर्नैवान्यकामतः ॥
सा च त्वदुक्तमार्गेण भवेदन्वितगोचरा ।
स्वरूपगोचरा नेति तुल्यो दोषः प्रसज्यते ॥
यस्त्वयास्मान्प्रति पुरा पट्वभ्यासेति वर्णितः ।
पदैः स्वरूपमात्रेण स्मारिता अभिधानतः ॥
पदार्था रचिता मत्ये वाक्यार्थान्वयशालिनः ।
न साहचर्यमात्रेण स्मारितास्ते तथा मताः ॥
भवतः साहचर्येण स्मारितार्थान्विताभिधा ।
इति दोषस्तवैव स्यान्नास्माकमिति चेन्मतम् ॥
गङ्गायां घोष इत्यादौ कुतस्तर्हि भवन्मते ।
तीरादेरभिधाभावात्प्रतिवासादिनान्वयः ॥
किञ्च स्वरूपमात्रस्य स्मारितस्याभिधानतः ।
गवादेः सहकारित्वस्मारितानयनादिना ॥
आकाङ्क्षोपरतेस्तावद्गामित्येतत्पदश्रुतौ ।
पश्येति श्रवणे पश्चादनाकाङ्क्षस्य गोः सतः ॥
नाभिधानप्रतीतो(ते ?)ऽपि दर्शनार्थेऽन्वयं व्रजेत् ।
अभिधानप्रतीतोऽर्थो वाक्यार्थान्वयमश्नुताम् ॥
नेतरस्त्वियति नो वेदे वचो राजनि वास्ति नः ।
ततस्त्वदुक्तमार्गेण वाक्यार्थोच्छेद आपतेत् ॥
ततश्चानुभवाभावादन्वितस्यैव वस्तुनः ।
कुतस्तज्जन्यसंस्कारो भवेदन्वितगोचरः ॥
कुतस्तरां चासतोऽस्य पदैरुद्बोधनास्तिता ।
कुतस्तमां च पूर्वानुभूतार्थान्वयसंस्मृतिः ॥
पट्वभ्यासाहितेत्यादिकेनोक्तातः पदैः स्मृतिः ।
कार्या स्वरूपमात्रेण स्वार्थेष्वित्यावयोः समम् ॥

धियमिति कृतमत्र पदानां सामर्थ्येनेति साम्प्रतम् । *पदानभिहितानां तेषां मानान्तरगोचराणां †वाक्यार्थधीहेतुभावादर्शनात् । श्वेतमध्यक्षं पश्यतो हेषारवं च शृण्वतः खुरनिष्पेष(क्षेप)शब्दं च 'श्वेतोऽश्वो धावति' इत्यन्वितधियः पदश्रवणमन्तरेणोत्पादो दृष्ट इति चेत्—न । अनुमानादर्थापत्तेर्वा तदवगमात् । ‡अनवगमाद्वा एवंवादी हि तावत्प्रष्टव्यो‖ व्याचष्टाम्—किंस्विच्छ्वेतसमानाधिकरणौ येन हेषाध्वनिखुरनिष्पेष(क्षेप)शब्दाववसितौ तस्य ज्ञानं निरूप्यते, आहोस्विद्येन सितिमा च पदनिष्पेष(क्षेप)शब्दो हेषाध्वनिश्च स्वरूपमात्रेणावसितः; तत्र पूर्वस्मिन्कल्पे लिङ्गसामर्थ्यजमेतत्, न पदार्थसामर्थ्यजम् । उत्तरस्मिन्नपि द्रव्यान्तराभावनिश्चये सत्यर्थापत्तिः, तदभावे च नावसाय एव ।

अपि च पदार्थसामर्थ्यजत्वाभ्युपगमे शब्दमूलत्वाभावेनाशाब्दत्वात् मनसश्च बाह्यानपेक्षस्याप्रवृत्तेः षट्प्रमाणीव्यतिरिच्यमानसहकारिसापेक्षत्वे ¶सप्तमप्रमाणाभ्युपगमप्रसङ्गः । तत्सिद्धमेतन्नानभिहिता अर्था वाक्यार्थधीहेतव

---

अतश्चैतद्वेदितव्यमेवमेव विपश्चिता ।

संस्काराति[1] . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . . .

---

* (पदानभिहितानां)—'यदनभिहितानामिति ३ पु. पाठः' इति टिप्पणी ।

† (वाक्यार्थधीहेतुभावादर्शनात्)—'तथा च तत्र पदाध्याहार इति भावः । अन्यत्रापि क्वचित्प्रविश पिण्डीमित्यादावध्याहारस्थले इष्टापत्तिः ।' इति टिप्पणी ।

‡ (अनवगमाद्वा)—'व्याप्तिज्ञानाद्यभावे इति शेषः । तत्सत्त्वेऽपि तस्याः शाब्दत्वाभावाच्चेत्यपि वक्ष्यति' इति टिप्पणी ।

‖ (प्रष्टव्यो)—'पृष्ट इति ३ पु. पाठः' इति टिप्पणी ।

¶ (सप्तमप्रमाणाभ्युपगमप्रसङ्गः)—'अर्थसहकारिकारणकमनसोऽर्थस्य वा केवलस्य प्रमिति जनकताया अक्लृप्तत्वादिति भावः' इति टिप्पणी ।

१. अत्र व्याख्यायां पत्रषट्कपरिमितग्रन्थलोपः ।

इति पदैरभिहितानामयं महिमा अभ्युपेतव्यस्तेषाम् । तथा च पदार्थानां वाक्यार्थप्रत्ययाधानसामर्थ्यम्, पदानां च तत्सामर्थ्याधानसामर्थ्यमिति शक्तिद्वयं कल्पनीयम् । अन्विताभिधानवादिनस्तु प्रथमावगतानां पदानामभिधायकानां वाक्यार्थप्रत्ययोपजनपर्यवसिततात्पर्यवृत्तीनामेकमेवाकाङ्क्षा-योग्यतासत्तिरूपोपाध्युपायगृहीतार्थान्तरान्वितस्वार्थाभिधान-सामर्थ्यमिति लाघवात् (वम् ?), अतोऽर्थाभिधायिनां पदानामेव वाक्यार्थधीहेतुभाव इति चतुरस्रम् ॥

अत्राभिधीयते—एष तावदौत्सर्गिको न्यायो यदसति बलवद्बाधकोपनिपाते

सहकारिणि कार्ये च प्रत्यासन्नं हि कारणम् ।
सति तद्भावभावित्वे तथा चार्थस्मृतिः पदात् ॥

भवति हि कुतश्चिन्मानसापराधाद्वि(दवि ?)दितपदार्थो विदितपदरूपमात्रश्चेतनो न मनागपि वाक्यार्थमवगच्छति, अवगच्छति तु समभिव्याहृतपदकदम्बकोपजनितस्वार्थस्मृत्य-

---

पदप्रसक्त्यासत्ति(प्रत्यासत्ति ?)र्दर्शिता । तथा च पदानां सहकारित्वमिति भावः । अत्र श्लोकाः—

कारणञ्चेत्पदज्ञानमङ्गमेव पदार्थधीः ।
पदार्थबुद्धेर्हेतुत्वे पदधीरुपकारिका ॥

पदस्य सन्निधिः सिद्ध्येत्स्वार्थेन सहकारिणा ।
वाक्यार्थप्रत्यये कार्ये विप्रकर्षः प्रसज्यते ॥

पदार्थबुद्धेः कार्येऽपि पदज्ञानेऽपि सन्निधिः ।
इति सैवाभ्युपेतव्या वाक्यार्थज्ञानकारणम् ॥

अथवा—पदानि वाक्यार्थधीहेतव इति भवन्तो मन्यन्ते, वयन्तु पदार्था इति । आकाङ्क्षादित्रयस्य तु सहकारित्वमावयोः समानम्,

नन्तरम्। तदमूषामेव (मानसीनां) स्वार्थस्मृतीनामाकाङ्क्षा-योग्यतासत्तिसहकारिणीनां कारणत्वं वाक्यार्थप्रत्ययं प्रत्यध्यवस्यामः ॥

वाक्यार्थप्रत्ययस्य कार्यत्वं च। तत्रैतत्तावदविवादसिद्धम्, यदसति विधुरप्रत्ययोपनिपाते सहकारिणः कार्यस्य च प्रत्यासन्नं कारणमिति यत्तद्भावभावित्वं स्यात्, ईदृशी च पदार्थस्मृतिरिति सैयान्तरङ्गत्वाद्वाक्यार्थबुद्धेः कारणमित्युक्तम्। अत्र श्लोकाः—

आकाङ्क्षासत्तियोग्यत्वं सहकारीति निश्चितम्।
वाक्यार्थप्रत्ययः कार्यं वाक्यस्येत्यप्यवस्थितम्॥
व्यतिषङ्गो हि वाक्यार्थः स पदार्थेष्ववस्थितः।
आकाङ्क्षादित्रयमपि पदार्थेष्वेव वर्तते॥
अतोऽन्तरङ्गता युक्तेः पदार्था एव कारणम्।
पदानान्तूपयोगित्वं पदार्थप्रतिपादने॥
यदि तद्भावभावित्वं पदेष्वेव प्रतिष्ठितम्।
अन्तरङ्गत्वयुक्तेश्च ततो बाधनमिष्यताम्।
न त्वेवमस्ति खल्वेतन्मानसादपराधतः॥
यदज्ञातपदार्थोऽयं विज्ञातपदमात्मकः।
न मनागपि वाक्यार्थमधिगच्छति चेतनः॥
पदोपजनितस्वार्थस्मृत्यनन्तरमेव तु।
अधिगच्छति वाक्यार्थं स एव पुनरित्युत॥

ननु पदानि प्रत्येकमेव पृथक् स्वार्थस्मृतीर्भावयित्वा निवृत्तव्यापाराणि, पश्चात्तेषां सम्भूय स्मृतिजन्मनि न पदान्येव कारणम्, विरम्य व्यापारप्रसङ्गात्; अत उक्तम्—मानसीनामिति॥ सत्यम्, प्रत्येकस्मृत्यनन्तरं प्रणिधानात्सम्भूय प्रत्येकं च स्मृतयो मनसैवाविर्भाव्यन्त इति। अथवा—वाक्यार्थप्रत्ययं प्रत्यन्तरङ्गत्वं दर्शितम्। मानस्यो हि स्मृतयः। मानस्यः प्रत्यासन्नतरा इत्यर्थः। अथवा—वाक्यार्थप्रत्ययपूर्वभावित्वेन वेदितव्यम्। मनसैव तासां गृह्यमाणत्वादित्यभिप्रायः।

1. 'तदमूषामेव मानसीनां स्वार्थस्मृतीनां' इति व्याख्यात्रभिमतः पाठः।

यदपि मतम्—स्वार्थस्वरूपस्मृतयो(पि) हि [1]वस्तुतस्तदर्थान्तरसङ्गतार्थगोचरा न [2]स्वरूपगोचरमर्थान्तरेण घटयन्ति, विभ्रमप्रसङ्गात् । न खलु प्रासादमात्रस्य [3]स्मरन्तोऽस्मरन्त(श्च) तद्देशं पाटलिपुत्रं स्वरूपमात्र[4]स्मृतया माहिष्मत्यैनं घटयितुमीशते, ईशाना वा भवन्त्यभ्रान्ताः ॥

तथा पदान्तरवर्तित्वसाधनायापीति योजना (?) । अथवा—स्मृतय एव न सन्तीति (न ?) वक्तव्यम्, सर्वत्वसंवेद्यत्वादिति । अथवा—स्मृतौ तु मनसो बाह्यप्रवृत्तौ न कारणान्तरापेक्षेति दर्शयितुं 'मानसीनाम्' इत्युक्तम् । यद्यपि पदार्थस्मृतयः कारणम्, तथापि नातिप्रसङ्गः, आकाङ्क्षादित्रयसहकारित्वं प्रति सर्वेषामविवादात् इति दर्शितम्—आकाङ्क्षेति ॥ अनेन चाकाङ्क्षायोग्यतासत्तीनां पदार्थस्मृतीनां चैकालम्बनत्वेन प्रत्यासत्तिविशेषो दर्शित इति वेदितव्यम् । एतच्च सर्वं भवताप्यङ्गीकृतमेवेति दर्शितं एवकारेण ॥

सम्प्रति श्लोकात्पूर्वतनस्य 'असति बलवद्बाधकोपनिपाते' इत्यस्य व्यावर्त्यामाशङ्कान्दर्शयति—यदपि मतम् ॥ किन्तदित्याह—**स्वार्थस्वरूपस्मृतयो . . . . . . . . . . विभ्रमप्रसङ्गात्** ॥ एतदेव निदर्शनेन प्रतिपादयन्नाह—**न खलु . . . . . . भवन्त्यभ्रान्ताः** ॥ **वस्तुतस्तदर्थे**त्यादिविशेषणं विभ्रमप्रसङ्गे बीजतयोपन्यस्तमिति वेदितव्यम् । '**स्वरूपगोचरम्**' इति कर्मधारयः । **प्रासादमात्रेति** ॥ 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । तस्या वैकल्पिकत्वात् '**तद्देशम्**' इति द्वितीया; प्रासाददेशमित्यर्थः । **स्वरूपमात्रस्मृतयेति** ॥ प्रणिधानादिना संस्कारोन्मेषात् । **एनम्**—प्रासादम् । **ईशते**—लौकिका इति

१. 'स्मृतयोऽपि हि वस्तुतदर्थान्तर' इति मु. पु. पाठः । 'वस्तुतस्तदर्थान्तरेति ३ पु. पाठः' इति टिप्पणी ।

* (वस्तुतदर्थान्तरसङ्गतार्थगोचरा)—'वस्तुभूतेन ततोऽर्थान्तरेण सङ्गतोऽर्थो गोचरो यासां तादृश्यः स्मृतय इत्यर्थः ।' इति टिप्पणी ।

२. 'स्वगोचरं' इति मु. पु. पाठः ।

३. 'स्मरंतोऽस्मरतश्च तादृशपाटलिपुत्रं' इति मु. पु. पाठः ।

४. 'स्मृतयो' इति मु. पु. पाठः ।

तदप्यसाम्प्रतम् । मा नाम भूदीदृशं [1]स्मरणफलस्य संस्कारस्य सामर्थ्यम् यत् अनुभूताननुभूत[2]स्वरूपतदर्थान्तरसंसर्गविषयमाधत्ते स्मरणं *समीचीनमिति । सम्भवति तु

---

सिद्ध्यति । तेषाञ्च विशेषणम्—'स्मरन्तोऽस्मरन्तश्च' इति । ईशाना वेति ॥ वाशब्देन न खल्वेतदित्य(त्यित्येतद)नुकृष्यते । 'अभ्रान्ताः' इत्यस्यानन्तरं इतिशब्दो द्रष्टव्यः । अतोऽसामर्थ्यं नाम बाधकं बलवदस्त्येवेति दर्शितमनेनेति ॥

अत्रोत्तरत्वेन 'असति बलवद्बाधकोपनिपाते' इत्येतद्व्याचष्टे—तदप्यसाम्प्रतम् ॥ असाम्प्रतत्वमेव दर्शयन्नाह—मा नाम भूत् . . . सामर्थ्यम् ॥ नामशब्दो यथायोगं 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्येषु द्रष्टव्यः । ईदृशम्—वक्ष्यमाणम् । 'मा नाम भूत्' इत्यस्य बीजत्वेन 'स्मरणफलस्य' इत्युक्तम् । बहुव्रीहिश्चायम् । संस्कारत्वादेव स्मरणफलत्वमभिप्रेतम् । 'ईदृशम्' इत्येतदेव व्यनक्ति—यदनुभूत . . . . . . समीचीनमिति ॥ यत्—यस्मात्सामर्थ्यादित्यर्थः । आधत्ते—संस्कार इति सिद्ध्यति । अथवा—संस्कारसामर्थ्यमाधत्त इति । संसर्गानुभवदशायां यदनुभूतस्वरूपं प्रासादादि तच्छब्दनिर्दिष्टं तस्य, यच्चाननुभूतस्वरूपं अर्थान्तरं माहिष्मत्यादि तस्य च द्वयोः संसर्गो विषयो यस्य स्मरणस्य तत्तथोक्तम् । असमीचीनन्तु प्रत्यभिज्ञानविभ्रमे स्वप्ने चाधत्त इति समीचीनग्रहणम् । 'समीचीनम्' इत्यस्यानन्तरं यदि इतिशब्दो दृश्यते तदा 'इति यत्' इत्यन्वयः । क्वचित्पाठः— 'अनुभूतस्वरूपतत्तदर्थान्तरसम्बन्धविषयम्' इति । अत्रानुभूतस्वरूपत्वेन स्वरूपमात्रस्मृतत्वमपि विवक्षितमिति द्रष्टव्यम् । तथा च 'स्वार्थस्वरूपस्मृतयोऽपि हि' इत्यादेः प्रतिनिर्देशोऽयमिति स्पष्टमेव । पूर्वपाठेऽपि तस्यैव निर्देश इति द्रष्टव्यम् । कथन्तर्हि

---

१. 'स्मरणफलसंस्कारस्य' इति मु. पु. पाठः ।

२. 'स्वरूपतदर्थान्तरसम्बद्धद्वयविषयं' इति मु. पु. पाठः ।

* (समीचीनमिति)—'संस्कारस्य स्वगोचरागोचरविषयकस्मृतिजनकत्वाभावेऽपि स्मृतेर्वक्ष्यमाणाद्युपपत्त्या तादृशप्रमितिजनकत्वमङ्गीक्रियते इति यावत् । सामर्थ्यं कर्तृ, समीचीनमबाधितं स्मरणं कर्म । आधत्ते जनयतीत्यर्थः ।' इति टिप्पणी ।

समभिव्याहृतपदावलीलब्धजन्मनाम् अर्थस्वरूपस्मृतीनाम् आकाङ्क्षादिरूपसहकारिभेदोपधानाहितदशान्तरोपात्तप्रमाणभावानाम् अनन्तरदृश्यमानमानान्तरानधिगतस्वार्थपरस्परसम्बन्धनिर्भासप्रकाशफलानाम् । अन्यथा प्रत्यभिज्ञानमपि

---

वाक्यार्थप्रतिपत्तिसिद्धिः ? अत आह—**सम्भवति तु . . . . . . . . प्रकाशफलानाम्** ॥ अत्र '**ईदृशं सामर्थ्यं यदनुभूत**' इत्यादेरनुषङ्गो द्रष्टव्यः । समभिव्याहृतानां पदानामावल्याः सकाशाल्लब्धं जन्म याभिरिति विग्रहः । **अर्थस्वरूपेति** व्यतिरिक्तानां व्यवच्छिनत्ति । आकाङ्क्षादिरूपैः सहकारिभेदैः यदुपधानं तेनाहितं यद्दशान्तरं अवस्थान्तरं तेनोपात्तः प्रमाणभावो यासां यासु वेति विग्रहः । **उपधानशब्दो** भावसाधनः । करणसाधनत्वे त्वाकाङ्क्षादिरूपैः सहकारिभेदैरेवोपधानैः उपाधिभिराहितमित्यादि । **सहकारिभेदेति** ॥ यथा प्रत्यक्षानुमानयोः सम्प्रयोगो व्याप्तिस्मरणं च सहकारिविशेषः एवमत्राकाङ्क्षादित्रयं विशिष्टं सहकारीति । स्वेतरपदानन्तरमेव दृश्यमानम्, मानान्तरेणानधिगतस्य स्वार्थानां परस्परसम्बन्धस्य निर्भासि आकारो यस्मिन्प्रकाशे तथाविधप्रकाश एव फलं यासामिति विग्रहः । **सम्बन्धनिर्भासेति** कर्मधारयः बहुव्रीहिर्वा । अत्रापि **मानान्तरानधिगतेति** सम्बन्धविशेषणम् । **अनन्तरशब्देनान्वयव्यतिरेकौ** दर्शितौ । **दृश्यमानेत्यनेन** प्रकाशफलस्य मानसप्रत्यक्षत्वं दर्शितम् । स्वार्थपरस्परसम्बन्धस्य प्रमाविषयत्वायानधिगतविशेषणमिति स्पष्टम् । समभिव्याहारान्यथानुपपत्त्या पदार्थैर्वाक्यार्थबोधः क्रियत इति दर्शयितुं **समभिव्याहृतेति** पदविशेषणं तदावलीविशेषणं वा दर्शितमिति वेदितव्यम् । यदेतदर्थ(स्व)रूपस्मृतीनां विशेषणत्रयमुक्तं तदन्विताभिधानवादिनामभिहितान्वयवादिनामुभयेषामपि सम्मतमेवेति न तत्प्रसाधनापेक्षेति । अन्विताभिधानवादिभिस्तावदुक्तम्—'यावन्ति पदानि वाक्ये, तावन्ति श्रुत्वा न्यायानुसारेण वचनव्यक्तिविशेषमवसायार्थोऽवगम्यते' इति ।

---

१. 'दशान्तरोपपादितप्रमाणभावानां' इति मु. पु. पाठः । 'दशान्तरापादितप्रमाणाभावानामिति २ पु. पाठः' इति टिप्पणी ।

**नोपजायेत । तत्रापि देशकालादिभेदोपहितस्वरूपसंवेदनजन्मा संस्कारः तदाहिता वा स्मृतिः कथं स्वार्थं देशान्तरेण**

तथा 'न च सम्बन्धग्रहणाशक्तिः, उपाधिविशेषाश्रयणेन सुकरत्वात् । आकाङ्क्षासन्निधानोपस्थापितान्वययोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदानीति व्युत्पत्तिपरिग्रहे न किञ्चिदनुपपन्नम्' इति । तथा 'तत्प्रतिपत्तये शब्दार्थव्यवहारः' इति । व्यतिषक्तप्रतिपत्तय इत्यर्थः ॥

तथा वार्तिके—

'विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनः ।' इति ।

तथा—

'तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः ।
तस्मात्तत्स्मरणेष्वेव संहतेषु प्रमाणता ॥' इति ॥

तथा—

'अपेक्षया च सर्वोऽसौ सम्बन्धं प्रतिपद्यते ।' इति ।

तथा—

'यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ? ।' इति ।

तथा—

'आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ।' इति ।

तच्छब्देन पदार्थपरामर्शः ।

तथा—

'पदन्त्वतोऽ(दमभ्य)धिकाभावात्स्मारकान्न विशिष्यते ।'
'स्तोकोऽपि व्यतिरेको यस्य (यस्स ?)
वाक्यस्ये(स्यै ?)व गोचरः ॥' इति ॥

ननु यत्पदार्थस्मरणम् तन्न प्रमाणम्, स्मरणत्वात्प्रसिद्धवदित्यनुमानबाधितं पदार्थस्मृतिप्रामाण्यमिति; अत्राह—**अन्यथा प्रत्यभिज्ञानमपि नोपजायेत ॥ अन्यथेति ॥** स्मृतेः प्रमाजननशक्त्यसम्भव इत्यर्थः । वाक्यार्थज्ञानप्रत्यक्षप्रत्यभिज्ञानयोस्तुल्ययोगक्षेमत्वादिति भावः । एवं प्रत्यभिज्ञाने साम्यं दर्शयन्दोषसाम्यं तावदाह—**तत्रापि देशकालादि ...... घटयेत् ॥ तत्रापि**—प्रत्यभिज्ञानेऽपीत्यर्थः । **देशकालादि-**

१. 'देशकालोपहित' इति मु. पु. पाठः । 'देशकालभेदोपहितेति ३ पु. पाठः' इति टिप्पणी ।

**कालान्तरेण वा घटयेत् । तत् इन्द्रियादिसहकारिसमवधान-प्राप्तदेशान्तरयोरेतयोः पूर्वापरदेशकालानुगतैकवस्तुगोचर-प्रत्यभिज्ञाप्रसवसहः कोऽपि महिमा तादृगभ्युपेतव्यः ॥**

---

**भेदोपहितस्वरूपसंवेदनजन्मा**—देशकालावस्थाक्रमेन भेदेनोपहितमनुरक्तं यत्स्वरूपं तस्य यद्वेदनं तस्माद्यस्य जन्मोत्पत्तिः तदेव वा जन्म प्रभवो यस्येति विग्रहः । केचित्संस्कारं प्रमाणमाचक्षत इति संस्कारग्रहणम् । **तदाहितेति** ॥ देशकालादिभेदोपहितस्वरूपसंवेदनजन्मना संस्कारेणाहितेत्यर्थः । **देशान्तरेण कालान्तरेण वेति** ॥ अनुभवगोचराभ्यां देशकालाभ्यामन्येन देशेन कालेन वेत्यर्थः । केचित्तु वादिनः संस्कारस्य प्रत्यभिज्ञाहेतुत्वमाचक्षते, अन्ये तु स्मरणस्येति मतभेदेन स्थितिरिति वेदितव्यम् । एवमनुपपत्तिसाम्यं दर्शयित्वा परिहारसाम्यमपि दर्शयति—**तत् इन्द्रियादि . . . . . . . . . तादृगभ्युपेतव्यः** ॥ तदित्यव्ययम्, तस्मादित्यर्थः । अनुपपत्तिसाम्यादन्यस्य च परिहारस्यासम्भवादिति । **इन्द्रियादीति** ॥ आदिशब्दः प्रकारवाची । तेनान्यदपि यत् कार्यतः सहकारितया गम्यते तदपि न तथात्वमतिवर्तते । ततश्चाकाङ्क्षादीनामपि सहकारित्वं नासम्भावितमिति भावः । अथवा—अनुमानस्यापि प्रत्यभिज्ञानत्वाङ्गीकरणाद्धेतोरादिशब्दोपादानम् । इन्द्रियादीनामेव सहकारिणां यत्समवधानं तेन कारणेन प्राप्तं देशान्तरमन्यादृशत्वं याभ्यां तयोः । **एतयोः**—संस्कारस्मरणयोरित्यर्थः । मतभेदेनेति भावः । **पूर्वेति** ॥ पूर्वापरयोः कालयोर्देशयोर्वानुगतमेकं वस्तु गोचरो यस्यास्तस्याः प्रत्यभिज्ञायाः, प्रसवसहः प्रसवं सहत इति, प्रसवाय पर्याप्तो भवति यः, स इत्यर्थः । स्मृतिसंस्कारौ देशकालाद्यतिरेकं बोधयितुं न पर्याप्नुत इत्येतत्स्वरूपप्रयुक्तम्, देशान्तरप्राप्तौ त्वपरदेशकालानुगतत्वाधिक्यबोधजननमपि न विरुद्ध्यत इत्यर्थः । '**कोऽपि**' इत्यनेन प्रमाणान्तरविषयत्वाभावं सूचयति । **महिमा**—

---

१. 'तत्र हि इन्द्रियादि' इति मु. पु. पाठः ।

२. 'प्रत्यभिज्ञानस्य प्रसवसहः' इति मु. पु. पाठः । 'प्रत्यभिज्ञानप्रसवसह इति ३ पु. समस्तः पाठ.' इति टिप्पणी ।

स चेहापि समानः, अन्यत्राभिनिवेशात् । न च

सामर्थ्यम् । तादृगिति । अनुभूताननुभूतस्वरूपतदर्थान्तरसम्बन्धविषयस्य स्मरणस्याधातेत्यर्थः । अभ्युपेतव्यः—केवलया कार्यान्यथानुपपत्त्येति भावः । तत्र संस्कारपक्षे प्रत्यक्षप्रत्यभिज्ञाने प्रथममालोचनज्ञानम्, तदनन्तरं संस्कारोन्मेषः, तदनन्तरं स्मरणं जायमानम्, इन्द्रियसंयुक्तत्वात्स्मर्यमाणस्य, इन्द्रियसहकृतेन संस्कारेण प्रत्यभिज्ञात्मकमुपजन्यत इति स्थितिः । स्मरणपक्षे त्वालोचनानन्तरं संस्कारोन्मेषः, ततः स्मरणम्, तदनन्तरमिन्द्रियसंयुक्ते स्मर्यमाणे वस्तुनि स्मरणमेवेन्द्रियसहकृतं प्रत्यभिज्ञानमुत्पादयतीति । एवमनुमानेऽपि द्रष्टव्यम् ॥

एवं सपक्षे साधितं पक्ष उपनयन्नाह—**स चेहापि समानः** ॥ सः—महिमेत्यर्थः । इह—पदार्थस्मृतितत्संस्कारेष्वित्यर्थः । हन्त ! विस्मृतमस्माभिः, नात्यन्तसाम्यं विद्यते, अभिनिवेशविषयो हि भवतां प्रत्यभिज्ञागोचरे महिमा, नेहेति महान्विशेष इत्युपहसन्नाह—**अन्यत्राभिनिवेशात्** ॥ अभिनिवेशविषयत्वमात्रं त्वसमानमेवेत्यर्थः । अथवा—ननु पदानामन्वितविषयैकयैव शक्त्योपपत्तौ न पदार्थानां तच्छक्तिकल्पनोपपद्यत इति, अत्राह—**अन्यत्राभिनिवेशात्** ॥ यद्यभिनिवेशं मुक्त्वालोच्यते तदा समानः । परमार्थतस्तु न पदार्थशक्तिकल्पनामन्तरेण वाक्यार्थज्ञानस्योपपत्तिरिति भावः । एतच्च परीक्षाप्रस्तावायान्विताभिधानवादिनं सन्धुक्षयितुमुक्तमिति वेदितव्यम् ॥

ननु कुड्ये सति चित्रकर्मसम्भवः । तथा हि—न तावत्प्रत्यभिज्ञा नाम पूर्वापरदेशकालानुगतैकवस्तुगोचरं ज्ञानान्तरं सम्भवति, अस्यापि क्षणिकवस्त्वन्तरविषयत्वात् । एकत्वावसायस्तु समारोपमात्रमिति स्थितिः । न च तद्दृष्टान्तेन पदार्थस्मृतिषु तथात्वकल्पनासम्भवः, सर्वेषामेव भावानां क्षणिकत्वेन स्मृतिगतानां पदार्थानामन्वयबोधक्षणेऽवस्थानासम्भवात् । अन्वयकालवर्तिनां च क्षणिकत्वपक्षेऽन्यत्वेन स्मर्यमाणत्वाभावात् । स्मृत्यभिमानस्तु पूर्ववद्भ्रान्तिरेव । वाक्यार्थबोधस्तु प्रतिभामात्रमिति न्यायविदः प्रतिपेदिरे ।

## देशकालावस्थानानात्वेऽपि[1] वस्तुनो रूपं नानेत्युपपादितं

अतोऽनवसर एवायं विचारः—किं पदान्येव वाक्यार्थबुद्धेर्निमित्तम्, अथ पदार्थस्मृतय इति । अतो मुधैवायं प्रस्ताव इत्याशङ्क्याह—न च देशकालावस्था . . . . . . न्यायकणिकायाम् ॥ न्यायकणिकायां हि क्षणभङ्गनिराकरणे—'नन्वन्वयभेदप्रतिभासो न पुनरक्षणिकतामावहति भावानाम्, बाधके सति समारोपितगोचरत्वात् । अस्ति हि बाधकम्—यत् सत् तत् क्षणिकम्, यथा—घटादिः, संश्च विवादास्पदीभूतः शब्दादिः इति स्वभावहेतुः' इत्यादिना क्षणभङ्गपक्षमुपन्यस्य 'क्षणिकत्वप्रतिक्षेपात्' इति ग्रन्थमवतार्य 'इदमाकूतम् । न तावत्सत्त्वं क्षणिकत्वसाधनसमर्थम्, क्षणिकत्वेऽप्यस्यानु(त्वे व्यवस्थानु)पपत्तेरसाधारणत्वात्' इत्यादिना न वस्तुनो रूपं नाना, न प्रतिक्षणं भिन्नम् इत्येतदुपपादितमिति ॥

नन्वेवमर्थक्रियाकारित्वेऽपीति वक्तव्यम्, न तु देशकालाद्यवस्थानानात्वेऽपीति (इति) । सत्यमेतत् । न त्वेतत्क्षणिकत्वहेत्वनुवादमात्रम्, अन्यत्त्वनेनाशङ्क्यते—नन्वनवयववाक्यविवर्तो वाक्यार्थो न पारमार्थिकः, अतः पदानि वा पदार्थस्मृतयो वा तत्कारणमिति निरूपणा निरवकाशा । अनवयववाक्यविवर्तत्वेन तन्निमित्तत्वात् । न च क्रियाकारकसंसर्गादयो वस्तुभूताः सम्भवन्तीति, तत्राह—देशकालावस्थानानात्वेऽपीति ॥ न वस्तुनो रूपं नानेति सम्बन्धः । एतच्चोत्तरत्र संसर्गपरीक्षायां 'पुनः प्रकारान्तरेण प्रत्यवतिष्ठते परः—नन्वेवंजातीयकेष्वेवाभेदबुद्धेः एकं शब्दात्मानमुपागमन् (धीराः) । तथा हि—क्रियाकारकगुणगुणिप्रयोजनप्रयोजनिप्रभृतिषु संसर्गिषु, समूहिषु वा शिंशपाशोककिंशुकादिषु संसर्गः समूहश्चैको वस्तुभूतश्चकास्ति । चकासति च शशविषाणालातचक्रादयोऽवस्तुभूताः । सेयमेवंविधेष्वेकबुद्धिश्च वस्तुबुद्धिश्चैकमनवयवं शब्दात्मानमेवावलम्बते' इत्यादिना वैयाकरणमतमुपन्यस्य, परिहरति—'नान्यथासिद्धेः' इत्यादिना ।

---

१. 'अपि' नास्ति मुद्रितपुस्तके ।

न्यायकणिकायाम् । [1]ननूक्तं न मानान्तरानुभूतानामर्थ-रूपाणां वाक्यार्थधीप्रसवसामर्थ्यमुपलब्धम्, उपलम्भे वा [2]सप्तमप्रमाणप्रसङ्गः, [3]आगमस्य वा तत्रैवान्तर्भावः । तदेव प्रत्यक्षादिभिस्सह तुल्यकक्ष्यतयोपन्यसनीयम्, न त्वागम-

देशकालावस्थाभेदेऽपि वस्त्वेकमेवेति प्रतिपादितम्; एतदेवानेन ग्रन्थेन कृत्स्नेन क्रियते ग्रन्थक्लेशाभावाय। 'अन्यत्राभिनिवेशात्' इत्येतदसहमान आह—ननूक्तं न . . . . . प्रसङ्गः ॥ उक्तिः—'स्थिति-र्मानमव्यक्तम्' इत्यादिना अन्विताभिधानवादिभिश्चोक्तम्, 'यदि च श्वेतिमा मानान्तरगम्यान्वयबोधिनः(धी ?) तदा तस्मिन्नन्वये शब्दमूले मानमपरमुपेयम्' इति ॥ अथवा न सप्तमत्वापत्तिः, किन्तु 'शास्त्रं शब्द-विज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति लक्षितं यच्छाब्दं प्रमाणं अभिमतम् तद्धीति । एवंवादिनां मा भूत्सप्तमं प्रमाणम् । शाब्दं खलु शास्त्रं पदार्थस्मृतेरसन्निकृष्टेऽर्थे विज्ञानमित्येव लक्षयितव्यमापद्यत इत्याह—आगमस्य वा तत्रैवान्तर्भावः ॥ तत्र—सप्तमे प्रमाणे । पदार्थः खलु तृतीयं प्रमाणम् । तत्पञ्चविधम् प्रत्यक्षादिपञ्चकजनितानुभवप्रसूतत्वात्। अतो यथा चक्षुरादेः प्रत्यक्षत्वमेव न प्रमाणान्तरत्वं प्रत्यक्षान्तर्भावात्, एवं पदानुभवजन्मनोऽपि शास्त्रस्य पदार्थाख्यप्रमाणान्तर्भाव आपद्येत । एतदेव व्याचष्टे—तदेव प्रत्यक्षादिभिस्सह तुल्यकक्ष्यतयोपन्यस-नीयम् ॥ तदेव–पदार्थाख्यं प्रमाणमित्यर्थः । उपन्यसनीयम्—वृत्ति-कारादिभिः ॥ एवकारव्यावर्त्यमाह—न त्वागमः ॥ उपन्यसनीय

१. 'ननूक्तं न मानान्तरतोऽनुभूतस्मृतानामर्थरूपाणाम्' इति मु. पु. पाठः । 'ननूक्तं च मानान्तरतेऽनुभूतस्मृतमर्थरूपाणामिति २ पु. पाठः' इति टिप्पणी ।

२. 'सप्तमप्रमाणाभ्युपगमप्रसङ्गः' इति मु. पु. पाठः । 'प्रत्यक्षानुमानोपमान-शब्दार्थापत्त्यनुपलब्धिव्यतिरिक्तस्यार्थस्वरूपस्यापि प्रमाणतापत्तिरित्यर्थः' इति टिप्पणी ।

३. 'आगमस्य चात्रैवान्तर्भावे प्रत्यक्षादिभिस्तुल्यकक्ष्यतया तदेवोपन्यसनीयम्' इति मु. पु. पाठः ।

स्तद्भेदः* । न हि ब्राह्मणयुधिष्ठिराविति प्रयुञ्जते, प्रयुञ्जते तु ब्राह्मणराजन्याविति, वसिष्ठयुधिष्ठिराविति वा लौकिकाः । न च भेदान्तरोपन्यासेन भेदान्तरमुपन्यस्तं भवति । तदयं समस्तमानलक्षणप्रवृत्तो मानतुपस्यापि परित्यागे तेनैव सह

इति सिद्ध्यति । कारणमाह—तद्भेदः ॥ अस्यार्थः—यतोऽयं तद्भेदः पदार्थाख्यप्रमाणविशेष इति । न त्वागमस्तद्भेदः प्रत्यक्षादिभिः सह तुल्यकक्ष्यतयोपन्यसनीय इत्यत्र निदर्शनमाह—न हि ब्राह्मण . . . . . इति वा लौकिकाः ॥ प्रयुञ्जत इति वाशब्दादनुकृष्यते । तृतीयस्थाने विशेषोपन्यासादितरत्रापि सर्वत्र विशेषा एवोपन्यस्ता भवेयुरिति चेत्, तत्राह—न च भेदान्तरोपन्यासेन . . . . . . उपन्यस्तं भवति ॥ श्रुतहान्यश्रुतकल्पनाप्रसङ्गादिति भावः । अथवा—तदत्र प्रत्यक्षादिभिः सहोपन्यसनीयं तुल्यकक्ष्यत्वादित्यत्रैव हेत्वन्तरमाह—न च भेदान्तरोपन्यासेन . . . . . . भवति ॥ इदमाकूतम्—भेदानां परस्परव्यभिचारित्वान्नैकोपन्यासेनान्यसिद्धिः, सामान्योपन्यासे तु विशेषाः सर्वे एवोपन्यस्ता भवेयुः; अतोऽपि तदेवोपन्यसनीयम् 'न त्वागमस्तद्भेदः' इति ॥

ननु मा नाम भूद्विशेषान्तरमुपन्यस्य(न्यस्तम् ?), लक्षितं स्वतन्त्रोपयोगिताम(गितया अ ?)पेक्ष(क्ष्य ?)माणं त्वागमप्रमाणं (इति तदेवोपन्यस्तमिति, तत्राह— ?) तदयं समस्त . . . . . . . . स्वकौशलमपि त्यजेत् ॥ तत्—तस्मात् । अयम्—परीक्ष्यमिषेणापि लक्षणानि वदन्नयं भाष्यकार इत्यर्थः । समस्तमानलक्षणप्रवृत्तः, न तु चोदनामात्रलक्षणप्रवृत्तः, प्रत्यक्षाद्यभावान्तलक्षणकथनात् । मानतुषस्यापीति ॥ किं पुनरत्र सप्तमस्य परित्यागे षट्सु वा तृतीये षष्ठांशमात्रलक्षणेन पञ्चानामप्यंशानां परित्यागे इति अपिशब्देनैव दर्शितम् । तेनैवेति ॥ अनुपन्यस्तेन भेदान्तरेण, सप्तमेन प्रमाणेन वा ।

* (तद्भेदः)— 'अर्थस्वरूपस्मारकत्वादागमस्यार्थस्यैव प्रमितिजनकत्वात्पूर्वोदाहृते श्वेतिमचाक्षुषप्रत्यक्षखुरनिष्पेषश्रावणप्रत्यक्षदशायामश्वो धावतीति धियोऽर्थमात्रप्रभवत्वस्वीकारे आगमस्य क्वचिदर्थस्मृतावुपयोगेऽपि तस्याव्यापकत्वादिति भावः ।' इति टिप्पणी ।

१. 'न हि लोका ब्राह्मण' इति मु. पु. पाठः ।

२. 'युधिष्ठिराविति वा । न च' इति मु. पु. पाठः ।

स्वकौशलमपि त्यजेदिति *पदाभिहितानुभवानां वा पदाहितस्मृतिरूपाणां वा अर्थरूपाणामयमीदृशः† सामर्थ्यातिशयः, यतोऽर्थधियः उदय इत्यकामेनाप्यभ्युपेयम् । तथा च तिस्रः

---

**स्वकौशलमपीति ॥** तस्य परित्यागं कुर्वन्नेव तद्वत्स्वकौशलमपि त्यजेदेवेत्यर्थः । एतच्च—

'कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥'

इत्यादिवत्सहभावस्य कथनं सहोक्तिर्नामालङ्कार इत्यवगन्तव्यम् । उक्तमर्थं प्रकृते पर्यवसाययितुं प्रक्रमते—इति **पदाभिहिता . . . . . . अकामेनाप्यभ्युपेयम् ॥** इतिर्हेतौ । **'पदाभिहितानुभवानां वा'** इत्यन्विताभिधानवादिवत् अभिहितान्वयवादिनां केषाञ्चित्पदार्थबोधस्यानुभवत्वाङ्गीकरणमभिप्रेत्योक्तम्, **'पदाहितस्मृतिरूपाणां वा'** इत्यभिहितान्वयवादं स्थास्यन्तं आश्रित्योक्तमिति वेदितव्यम् । पदैराहितं स्मृतिरूपं ज्ञानं येष्विति विग्रहः; अथवा—पदैराहितस्मृतिरेव रूपो रूपणं निरूपणमनुसन्धानं येषामिति विग्रहः । **अर्थरूपाणा(मित्य ?)**-न्वयं व्यवच्छिनत्ति । अर्थरूपाणामीदृशः सामर्थ्यातिशयः न स्वरूपप्रयुक्त इत्यर्थः । **अयमित्यनेन** कार्यस्य प्रत्यक्षत्वात्तत्कारणस्यापि प्रत्यक्षदेशीयतां सूचयति । **ईदृशः**—अनुभूताननुभूतेति निर्दिष्ट इति । **सामर्थ्यातिशयः,** अस्तीति शेषः । **यतः**—यस्मादतिशयादित्यर्थः । अथवा हेतौ; **अर्थधियः उदयो**ऽस्तीति यत इति । **अर्थधियः**—वाक्यार्थधिय इति । **अकामेनेति** पूर्ववत् । ततः किम् ? इत्याह—**तथा च तिस्रः शक्तयः कल्प्येरन्, द्वे वा ॥** अत्र शक्ती कल्प्ये-

---

१. 'परित्यजेत्' इति मु. पु. पाठः ।

* (पदाहितानुभावानां वा)—'बौद्धपदार्थानामेव शाब्दधीविषयतापक्षे' इति टिप्पणी ।

२. 'अर्थरूपाणाम्' इति मुद्रितपुस्तके नास्ति ।

† (अयमीदृशः)—'पदाभिहितानुभवानामिति यदीदृश इति च २ पु. पाठः' इति टिप्पणी ।

३. 'अन्वयधियः' इति मु. पु. पाठः ।

शक्तयः कल्प्येरन्, द्वे वा । पदानां हि तावदर्थरूपाभिधानरूपा शक्तिः, तदर्थरूपाणामन्योन्यान्वयशक्तिः, तदाधानशक्तिश्चापरा पदानामेवेति । स्मार्गकत्वपक्षे तूक्तं शक्तिद्वयम् । अन्विताभिधाने तु पदानामेकैव शक्तिः, तत् कल्पनालाघवात् एतदेव न्याय्यमिति ॥

अत्रोच्यते—सत्यम्;

कल्पनालाघवं यत्र तं पक्षं रोचयामहे ।
तदेव कतरत्रेति निपुणं सम्प्रधार्यताम् ॥

एकैव किल शक्तिरन्विताभिधानवादिभिरन्वितस्वार्थगोचरा अभिप्रेयते पदानाम्, *न तु विशेषे, †तदप्यभिधीयते । सेयं न तावदन्वयमात्रविषया । तन्मात्रविषयत्वे तस्याविशेषात् सर्वशब्दानां पर्यायताप्रसङ्गः । नापि व्यतिषक्ता-

---

याताम् इति विपरिणम्यानुकृष्यते पदद्वयम् । विकल्पाभिधानं संख्ययोरुपपादयन्नाह—पदानां हि ...... अभिधानरूपा शक्तिः ॥ अत्र कल्प्येतेति सिद्ध्यति । तावच्छब्देन सूचितमेव दर्शयति—तदर्थरूपाणां अन्योन्यान्वयशक्तिः ॥ अन्योन्यान्वयस्य बोधने शक्तिः अन्वयशक्तिरभिप्रेता । क्वचित्तु शक्तिरित्यस्मात्पुरस्तात् प्रत्यायनेत्यपि दृश्यते । तच्छब्देन पदानां निर्देशः, कल्प्येतेत्येव[3] .........

---

१. 'अर्थरूपानुभवजननशक्तिः अर्थरूपाणामन्योन्यान्वयप्रत्यायनशक्तिः' इति मु. पु. पाठः ।

२. 'तदाधानशक्तिश्च' इत्यारभ्य 'तद्विषयतया अभ्युपगते भवतः' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्याने ग्रन्थपातात् ।

* (विशेषे)—'अन्विते न तु विशिष्ट इति २ पु. पाठः' इति टिप्पणी ।

† (एकैव किल ......तदप्यभिधीयते)—'स्ववाच्यप्रतियोगितानुयोगिताकत्वविशिष्टे तत्त्वेन तात्पर्यविषये वा, न तु सम्बन्धत्वव्याप्यतत्तद्रूपावच्छिन्ने, नानार्थत्वप्रसङ्गात्' इति टिप्पणी ।

३. अत्र व्याख्यानमातृकायां पत्रषट्कपरिमितग्रन्थपातः ।

भिधायि पदं न व्यतिषङ्गस्य वाचकम्, जात्यभिधायकमिव व्यक्तेः, व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य, व्यतिषक्तानां च स्वरूपतो भेदात् नैकार्थ्यं पदानामिति साम्प्रतम्। व्यतिषक्त इति स्वरूपमात्रं वोपलक्ष्येत, व्यतिषङ्गवद्वोच्येत। तत्र *रूपाभिधानजन्मा ख्यातिः जात्यभिधानजन्मेव व्यक्तिम् न व्यतिषङ्गमपि गोचरयितुमर्हति। न हि यथा आकारिण-मन्तरेणाकारोऽशक्यनिरूपण इति शब्दसामर्थ्यगोचरत्व-मनापन्नोऽप्याकार्याकाराभिधायिशब्दजनितविज्ञानविषय-भावं †नातिपतति तथा अर्थस्वरूपम् अन्वयमन्तरेण दुरधि-गमम्, येन स्वगोचरशब्दसामर्थ्यजन्मनि विज्ञानेऽन्वयमपि समर्पयेत्, तद्रूपस्यान्वयमन्तरेणापि शक्यनिरूपणत्वात्। नान्वयं विना तद्रूपं क्वचिदपीति चेत्, तत्किं लिङ्गमपि

तथैव पदशक्तिर्या स्थितेह्य(र्थनिरूपणे ?)।
नागोचरं कल्पयेत् (?) . . . . . . .॥
(कल्पयेत् ?) पदसामर्थ्यं नाप्यपेक्ष्येत
(नानपेक्ष्य ?) पृथग्धियम्।
विशेषणविशेष्यत्वादन्वितान्वययोर्द्वयोः।
विशेषणेऽन्वये पूर्वं ग्रहीतव्ये भवत्यपि॥
एतदप्यत्र वदितुं शक्यते न विपश्चिता।
न हि जातिधियो व्यक्तिर्विषयत्वेन सम्मता॥
पदशक्तिरियं यस्माज्जातिमात्रैकगोचरा।
न व्यक्तिबोधनायालं कुतो व्यक्तिः प्रतीयताम्॥

* (रूपाभिधानजन्मा ख्यातिः)—'स्वरूपमात्रनिरूपितशक्तिज्ञानमित्यर्थः' इति टिप्पणी।

† (नातिपतति)—'शुक्लादिशब्दगतशक्त्यविषयोऽप्याकारी गुणाश्रयो गुणमात्र-वाचकपदजन्यबोधविषयतां न मुञ्चतीत्यर्थः। आकारीति पृथक्पदम्' इति टिप्पणी।

न च प्रतीत्युपारूढजात्यपर्यवसानतः ।
व्यक्तिप्रतीतिस्तत्रैव सिद्ध्येदिति च साम्प्रतम् ॥

अपर्यवसितत्वस्य सर्वथैवानिरूपणात् ।
अपर्यवसितिर्नाम किं खल्वत्र विवक्ष्यते ॥

व्याप्तिर्वानुपपत्तिर्वा यद्वार्थान्तरमिष्यते ।
न तावदन्तिमः कल्पः तस्य काप्यप्रसिद्धितः ॥

प्रथमो वा द्वितीयो वा कल्पो नैवेह कल्पते ।
ज्ञातावेव प्रमाणत्वमनुमापककल्पकौ ॥

अज्ञातस्तेन विज्ञेया जातिस्ते प्रथमं भवेत् ।
अतश्च प्रतिपन्नैव जातिर्व्यक्तिप्रबोधिनी ॥

व्याप्त्या वानुपपत्त्या वा पश्चादेव कुतोऽनयोः ।
एकप्रतीतिविषयभावे दृष्टान्तता भवेत् ॥

दृष्टान्तेनापि नो सिद्ध्येदन्वितान्वययोरतः ।
एकप्रतीतिविषयभाव एतेन हेतुना ॥

न रूपिशून्या रूपेषु बुद्धिरित्यपहस्तितम् ।
चक्षुरादेर्हि शक्तत्वमुभयो रूपरूपिणोः ॥

रूपे तज्जनिता बुद्धिरशून्या रूपिणा ततः ।
न चक्षुषो रूपमात्रे शक्तिस्तद्बोधकत्वतः ॥

केवलाद्रूपिणो बुद्धिर्न शक्तेरिति साम्प्रतम् ।
चक्षुषः स्पर्शसंयोगाद्घटादिद्रव्यधीस्थितेः ॥

रूपिण्यपि न चेदिष्टा शक्तिः शब्दस्य रूपवत् ।
विना रूपिप्रतीते(स्स्यात् ?) रूपधीसम्भवस्ततः ॥

अन्यथानुपपत्त्यातो जातेर्व्यक्तिः प्रतीयते ।
**पार्थसारथिमिश्रैश्च** व्यभिचारोऽत्र वर्णितः ॥

'रूपिशून्या च रूपेषु धीरस्त्येव तु तद्यथा ।
हिमवर्तिनि हेमन्ते शैत्यसंविस्त्वगिन्द्रियात् ॥

तथा गन्धवति द्रव्ये नासाग्रमधिरोहति ।
न द्रव्ये जायते संविद्गन्ध एव तु जायते ॥

तस्माज्जात्यभिधायित्वाच्छब्दस्तामेव बोधयेत् ।'
किञ्चास्तु वाश्वादिपदैरन्तर्भावितरूपिणः ॥

रूपस्य प्रत्यये शक्तिः पृथग्रूपिणि मा स्म भूत् ।
तथापि न प्रतीतिः स्यादन्विते गर्भितान्वये ॥

तथा ह्यङ्ग ! भवान्पृष्टो व्याचष्टामिदमादरात् ।
वर्ततेऽन्वितशब्दोऽयं वस्तुन्यन्वययोगिनि ॥

विशेषणं किं ब्रूषे तमुपलक्षणमेव वा ।
अन्वयेन विशिष्टं यत्तन्न तावदिहा(दिमम् ? ) ॥

(विशेषणा ? )नवगतौ तथा सति विशिष्टधीः ।
नोत्पद्येतैव नाप्यन्यत्कारणं तस्य बोधने ॥

इति शक्तिः पदस्यैव विशेषणविशिष्टयोः ।
तत्र शक्तिद्वयं कल्प्यमापतेदन्वितस्य हि ॥

रूपमन्वयवत्तैव तेन तस्य प्रबोधने ।
अन्वयोऽप्यभिधेयः स्यान्नान्या गतिरिति स्थितम् ॥

किञ्चान्वितेतरस्वार्थबोधकस्येतराभिधा ।
नैवास्य(त ? )स्तु बह्वीनां कल्पनानां निराकृतिः ॥

मधुरा शर्करेत्यादिबहुदृष्टान्तवर्णनात् ।
अन्वितान्वययोः शक्तिद्वैतं केन निवार्यते ॥

प्रतियोगीतरपदादेव स्मृतिपथं गतम् ।
आत्मना तद्वदात्मीयं तत आत्मीयमन्वितम् ॥

पदस्य ब्रुवतः शक्तिगोचरोऽन्वय एव तु ।
इति चेन्नैतदप्यस्ति व्यतिषक्ताभिधानतः ॥

व्यतिषक्ताभिधानं हि टीकाकारनिरूपितम् ।
अवधीरितमेवं च वदतानेन वादिना ॥

स्वार्थेतरार्थभेदश्च कथमेवं प्रसिद्ध्यति ।
न हि कस्यचिदप्यर्थस्वरूपं शक्तिगोचरम् ॥

शक्तिगोचरमेवाहुः स्वार्थं लौकिकवैदिकाः ।
शक्तिश्चेदन्वयेष्वेव सर्वपर्यायतापतेत् ॥

अन्वितं चेदर्थरूपमभिधाशक्तिगोचरम् ।
ततोऽन्वयप्रतीतिस्ते केनोपायेन सेत्स्यति ॥

न तावदभिधानेन शक्तिगौरवभीतितः ।
अन्वितांशाभिधानं नो विमर्शमधिरोहति ॥

अन्वेयसम्मतं तस्मान्नान्वये शक्तिकल्पना ।
इति चेन्नैतदप्यस्ति वृथात्वादन्विते गिराम् ॥

इतरेभ्यः पदेभ्यो हि विज्ञाताः प्रतियोगिनः ।
स्मारितश्च पदार्थस्य स्वरूपं प्रथमं स्वयम् ॥

अन्वयश्चान्यतः सिद्ध इति किं नावबोधितम् ।
यद्बोधनायान्वितांशे शक्तिराश्रीयते त्वया ॥

न चान्वयादृते सिद्ध्येदन्वितांशोऽपि कश्चन ।
यदि त्वन्वययोगित्वमन्वयित्वं विवक्षितम् ॥

तदप्यन्वयविज्ञाने विज्ञातमिव लक्ष्यते ।
अन्येनास्यान्वयो नूनमिति सोऽयं विमृश्यते ॥

अथ चान्वयवत्पश्य विमृष्टोऽन्वित एव च ।
न चेत्सन्देहरूपत्वाद्विमर्शस्य प्रमाणता ॥

अन्वये(यो ?)ऽपि कुतः सिद्ध्येन्मानत्वे तद्वदेव तु ।
अन्वितोऽपि प्रसिद्ध्येत्ते वृथा स्यादन्विताभिधा ॥

ज्ञापनं ह्यभिधा नाम त्वन्वितोऽप्यन्वयाश्रयः ।
यथैव धातुना पूर्वं तत्रान्वयविबोधनम् ॥

प्रत्ययेन च तद्योगी निष्ठया पुनरुच्यते ।
विना विशेषणधिया विशिष्टे नैव धीरिति ॥

तथैवान्वयवाचित्वात्सर्वेषामपि ते भवेत् ।
समुदायगता शक्तिरर्थद्वितयबोधने ॥

विशिष्टवाचके शब्दे विशेषणविशेष्ययोः ।
उभयोरभिधानं स्याद्गोमयादिपदेष्विव ॥

सिद्धा गवादयः शब्दा न विशिष्टार्थवाचकाः ।
नाप्यन्यत्पदमस्तीह विशिष्टार्थस्य वाचकम् ॥

विशेषणं विना किञ्चिदशेषस्याभि(धायकम् ?) ।
(?) . . . . . . . . ह वार्तिककृत्स्वयम् ॥

'पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥'

विशेषणत्वेऽन्वयेऽपि शक्तिः स्यादन्विताशवत् ।
नाप्यन्वितोऽर्थमात्रं स्यात् (धातुनान्वयबोधतः ?) ॥

अन्तर्भाव्यैवान्वयं तन्न प्रतीतिमुपाश्नुते ।
न हि जातिर्यथा व्यक्तिमन्तरेणेह दुर्गमा ॥

पदार्थरूप(मप्येवं दुर्गमं ह्यन्वयादृते ?) ।

व्यक्तिरिव जातिवित्तौ
येन पदार्थस्वरूपवित्तौ च ।
प्रविशेदन्वय एषः
प्रतीयते ह्यन्वयं विना (तदपि ?) ॥

एवं च सत्यन्वयस्य पदान्नास्त्यन्यतो गतिः ।
तथा च सति तत्रापि शक्तिकल्पनमापतेत् ॥

ननु जातिर्यथा व्यक्तिमन्तरेण न सिद्ध्यति ।
तथा पदार्था अपि न व्यतिषङ्गं विना क्वचित् ॥

अस्त्यर्थेनान्वितत्वं स्यात्पदार्थानामिहान्ततः ।
अतोऽपर्यवसायित्वादन्वयस्यापि सिद्धितः ॥

व्यक्तिवन्नाभिधेयत्वं सत्यमन्वयमात्रधीः ।
अर्थापर्यवसानात्स्यान्न त्वन्वयविशेषधीः ॥

न लिङ्गिनं विनेति तदपि तन्निरूपणाधीननिरूपणमस्तु, तथा न लिङ्गत्वमपीति अनुमानमुत्पन्नसङ्कटं *आपद्येत । तस्मादन्वितं शब्दसामर्थ्यगोचर इत्यभ्युपगच्छता अर्थस्वरूपं च तदन्वयश्च तद्विषयतया अभ्युपगते भवतः। तदिह यदि

विशिष्टस्त्वन्वयश्शक्तिमन्तरेण न सिद्ध्यति ।
किञ्चापर्यवसानार्थो नान्योऽस्ति परमार्थतः ॥
व्याप्तेर्वानुपपत्तेर्वा नतो मानान्तरात्प्रमा ।
अतोऽन्वयस्य शाब्दत्वं दूरापेतं प्रसज्यते ॥
वक्तृज्ञानानुवादित्वं यथा लोकगिरां नव ।
अर्थापत्त्यनुवादित्वं तथा वेदगिरां भवेत् ॥
व्याप्यकल्पकयोर्यद्वा प्रत्यक्षेणोपलब्धयोः ।
विना व्यापककल्प्याभ्यां बुद्ध्यपर्यवसानतः ॥
तद्बुद्ध्यनुप्रवेशेन तयोः प्रत्यक्षता भवेत् ।
उत्सन्नसङ्कथं तत्र तत्प्रमाणद्वयं भवेत् ॥ इति ॥

**निवन्धनकृता** तु **'यथा आकारिणमन्तरेण'** इत्यादिना दृष्टान्तदार्ष्टान्तिकयोर्वैपम्यमात्रमुक्तम्, तेनैव प्रयोजनसिद्धेः । **पार्थसारथिमिश्रचिदानन्दपण्डिताभ्यां** दृष्टान्तत्वासिद्धेरेव (वह्नयो युक्तयः प्रदर्शिताः ?), तत्प्रकारश्च किञ्चिद्द्योतित एव । **अनुमानमित्यर्थापत्ते**रुपलक्षणम् । तथा लिङ्गलिङ्गि (?) . . . . . . . प्रधारणाप्रस्तावाय निश्चितत्वमन्विताभिधानस्य निरस्तम् । **तस्मादन्वितं शब्दसामर्थ्यगोचर** . . . . . . . . . . (**भवतः**) ॥ (?) . . . . . . . . . . . . .
'व्यतिपङ्गवद्वोच्येत' इत्येतत्पक्षाश्रयणमेवोपपद्यते नान्या गतिरस्तीत्यर्थः । **विशेपण** . . . . . . . (?) तथा च सति द्वयोरपि शब्दशक्तिकल्पना, नान्या गतिरस्तीत्यनुक्तसुज्ञानमित्यभिप्रायेण(?) . . . . संप्रधारणाप्रकारं प्रयोजनं च सूचयन्नाह—**तदिह यदि** . . . . . . **कल्पयिष्यामः** ॥

* (आपद्येत)—'लिङ्गस्य लिङ्गत्वस्य वा व्यापकाधीननिरूपणत्वेन तज्ज्ञानकाल एव व्यापकज्ञानाभ्युपगमे पक्षधर्मताज्ञानोत्तरजायमानप्रमितिविषयतानुपपत्तेरिति भावः' इति टिप्पणी ।

पदसामर्थ्यस्य स्वरूपमात्रगोचरतयाप्यन्वयधिय उदयमुपपादयितुं शक्ष्यामः, ततस्तावतैव परितोक्ष्यामः, तदन्वयविषयत्वकल्पनायाश्च विरंस्यामो लाघवाय ; अथ तु सहस्रेणाप्यनुसरणप्रयत्नैः[1] स्वार्थरूपमात्रोपक्षीणप्रवृत्तिनि पदसामर्थ्ये वाक्यार्थबुद्ध्युदयासम्भवः ततः परावृत्त्य शब्दसामर्थ्यस्यैवोभयविषयत्वं कल्पयिष्यामः । किं प्राप्तम्[2] ॥

**लाघवायेत्यन्तमभिहितान्वयविषयम् । परितोष्या(क्ष्या)म इति** ॥ न साक्षाच्छब्दवादिलोभेन क्लिश्यामह इति भावः । **तदन्वयेति** ॥ तच्छब्देन पदसामर्थ्यस्य परामर्शः । तस्य यदन्वयविषयत्वं तत्कल्पनाया इति पञ्चमी । अपादाने चेयम् । **लाघवाय**—कल्पनालाघवाय । **सहस्रेणेति, अनुसरणप्रयत्नै**रित्यनयोः सामानाधिकरण्यम् । स्वार्थरूपमात्रोपक्षीणा प्रवृत्तिर्यस्येति बहुव्रीहिः । वाक्यार्थस्य या बुद्धिः तस्याः शब्दादन्यतः उदयस्यासम्भव इति । वाक्यार्थबुद्ध्युदया(य ?)सम्भव इति नञ्रहितश्चेत्पाठः तदा पुनरपि स्वार्थरूपमात्रोपक्षीणप्रवृत्तेरपि पदसामर्थ्यादेव वाक्यार्थबुद्धेरुदयस्य सम्भव उपपत्तिरिति योजना । **ततः परावृत्त्येति** ॥ स्वार्थरूपमात्रोपक्षीणप्रवृत्तेः पदसामर्थ्यात्स्वतस्तावन्निवर्तामहे, पुनर्गत्यन्तराभावात् पदसामर्थ्यस्यैव सम्भवाद्वा **परावृत्य शब्दसामर्थ्यस्यैवो**पक्षीणप्रवृत्तिनोऽपि पूर्वमुपेक्षितस्यै**वोभयविषयत्वं** स्वरूपान्वयद्वयविषयत्वमपि कल्पयिष्यामः ।

'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।'

इति न्यायमवष्टभ्येत्यर्थः ॥

सम्प्रति परीक्षापदवीमारूढो मीमांसकशैलीमनुविदधानः स्वयमालोचयति—**किं प्राप्तम्** ॥ किं युक्तमित्यर्थः । सम्प्रधारणा ह्येवमुक्ता—किमभिहितान्वयः सम्भवी, सम्भवेऽन्विताभिधानपरित्यागः, उतासम्भवी, तदा अन्विताभिधानस्वीकारः इति । तत्र पूर्वपक्षस्य

१. 'अनुसरणप्रकारेण प्रयत्नानामर्थस्वरूपमात्रोपक्षीणवृत्तिनि' इति मु. पु. पाठः ।
२. 'किन्तावत्प्राप्तम्' इति मु. पु. पाठः ।

वाच्यरूपाविनाभूतव्यतिषक्तदशापराः ।
समभिव्याहृते[1](तेः ?) शब्दा भवन्त्यनुपपत्तितः ॥

सामर्थ्याधिगमो हि भावानां न मानान्तरजन्मा[2], किन्तु कार्योत्पत्त्यन्यथानुपपत्तावेवायतते[3] । तदियमपि[4] व्यतिषङ्ग-प्रतीतिः कथमपि दृष्टादृष्टप्रकारभेदसहायादुपपद्यमानोत्पत्ति-र्न पदसामर्थ्यमात्मनि प्रमाणयितुमर्हति । 'अनन्यलभ्यः शब्दार्थः' इति हि त्रैविद्यवृद्धाः । अत एवाख्यातादौ कर्त्राद्यभिधायितां नाद्रियन्ते । लभ्यते च समभिव्याहारा-न्यथानुपपत्त्या पदानामन्वितार्थपराणां स्वाभिधेयार्थरूप-समवेतान्वितावस्थाप्रत्यायनं लक्षणया । न हि पदान्य-समभिव्याहृतानि स्वाभिधेयप्रत्ययमात्रेण पर्यवसातुमीशते । न हि लौकिकाः पदार्थमात्रप्रत्यायनाय प्रवर्तन्ते । प्रति-

---

पूर्वमेवोपन्यस्तत्वात्तन्निराकरणेन सिद्धान्तवर्णनमेवात्रापेक्षितमिति कृत्वा सिद्धान्तमाह—

वाच्यरूपाविनाभूतव्यतिषक्तदशापराः ।
समभिव्याहृते(तेः ?) शब्दा भवन्त्यनुपपत्तितः ॥

कारिकां व्याचष्टे । अत्र **अनुपपत्तितः** इति पञ्चमं प्रमाणमुपन्यस्तम् । तत्र चतुर्णां परित्यागे पञ्चमस्य चोपन्यासे कारणं तावद्दर्शयति— **सामर्थ्याधिगमो हि . . . . . . आयतते** ॥ हिशब्दः श्लोकार्थोप-पादनद्योतनार्थः । अथवा—मानान्तरजन्मत्वाभावस्य कार्योत्पत्त्यन्यथा-नुपपत्त्या[5] . . . . . . . . . . . . . . . . . . . . . . . . . .

---

१. 'समभिव्याहृतेः' इति मु. पु. पाठः ।

२. 'मानान्तराधीनजन्मा' इति मु. पु. पाठः ।

३. 'अनुपपत्तावायतते' इति मु. पु. पाठः ।

४. 'तदियमपि व्यतिषङ्गप्रतीतिः' इत्यारभ्य 'पदार्थमात्रं बुभुत्सन्ते' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तके दीयते, व्याख्याने ग्रन्थपातात् ।

५. अत्र मातृकाग्रन्थे पत्रद्वयपरिमितग्रन्थपातः ।

पित्सितं खल्वेतदिति प्रतिपादयिष्यन्तः पदान्युच्चारयन्ति । अबुभुत्सितावबोधने त्वनवधेयवचनतया नामी लौकिका नापि परीक्षका इत्युन्मत्तवदुपेक्ष्येरन् । न च भूयो भूयः समधिगतं परं पदार्थमात्रं बुभुत्सन्ते । तदनधिगतमर्थमवगमयितुमनसः समभिव्याहरन्ति वृद्धाः पदानि । तदयं समभिव्याहारः पदानामनधिगतार्थप्रत्यायनप्रयुक्तः तमन्तरेणानुपपद्यमानः[१] स्वाभिधेयसमवेतामन्वितावस्थां लक्षयत्यनधिगतचराम्[२] ॥ तदुक्तम्—

'विशिष्टार्थप्रयुक्ता हि समभिव्यीहृतिर्जनः(ने ?) ।' इति ॥

---

समधिगते पदोच्चारण(णा ?)सम्भवादित्यर्थः । **अनधिगतमर्थमवगमयितुमनस इति** ॥ अनधिगतार्थावगमोद्देशेनेति यावत् । **समभिव्याहरन्ति**—एकवाक्यतया रचयन्ति । एकवाक्यतानिर्माणमेव हि शब्दरचना, पदानां नित्यत्वादिति भावः । उत्तरविवक्षया 'समभिव्याहरन्ति' इति निर्देशः । अत एवाह—**तदयं समभिव्याहारः ....... लक्षयत्यनधिगतचराम्** ॥ अनधिगतार्थस्य प्रत्यायनेनाङ्गिना प्रयुक्तः प्रेरित इति ; अथवा—अनधिगतार्थप्रत्यायनस्य कृते वक्त्रा प्रयुक्तः अनुष्ठितः ; अथवा—शब्दप्रयोग एव तद्धर्मे समभिव्याहारे उपचरित इति । **तमन्तरेणानुपपद्यमानः**—अनधिगतमर्थमन्तरेणासम्भवन्नित्यर्थः । मुख्यार्थासम्भवात् गङ्गायां घोष इत्यादिष्विव तदविनाभूतमर्थं लक्षयति । अतः प्रसिद्धलक्षणायोगक्षेमत्वमस्या इति भावः । **अनधिगतचरामिति** ॥ अन्वितावस्थायास्तत्र तत्रान्यत्वादिति भावः । एतच्च नोत्प्रेक्षामात्रम्, **वार्तिककारमिश्रैरेवाङ्गीकृतत्वादिति** भावः । (दित्याह ?)—**तदुक्तम्**—

**'विशिष्टार्थप्रयुक्ता हि समभिव्यीहृतिर्जनः(ने ?) ।' इति** ॥

---

१. 'तदन्तरेण' इति मु. पु. पाठः ।

२. 'अनधिगतचरीमन्वितावस्थां लक्षयति' इति मु. पु. पाठः ।

तदेवमनुपपद्यमानसमभिव्याहारपदजाताहितस्मरण-*प्रत्यासत्त्या दृश्यमानया अर्थगताकाङ्क्षासत्तियोग्यतासध्री-चीनया लक्ष्यमाणा अन्विताबस्था नात्मनि पदसामर्थ्यं प्रमाणयति, †अन्यलभ्यत्वात् ॥

एतत्तु **निबन्धन** एव व्याख्यातमर्थत इति वेदितव्यम् । उक्त-मेवार्थं संक्षिप्य दर्शयन्नुपसंहरति—**तदेवमनुपपद्यमान ....... अन्यलभ्यत्वात्** ॥ **तत्**—तस्मात्प्रकारान्तरस्यासम्भवादित्यर्थः । **एवम्**—उक्तेन प्रकारेण । **अनुपपद्यमानसमभिव्याहारेति** ॥ विशेषणं बहुव्रीहिः, पदजातं चान्यपदार्थः । **पदजातेति** षष्ठीसमासः । जातेत्यन्तस्य **आहित**-पदेन तृतीयासमासः । **आहित**शब्दस्य **स्मरण**शब्देन कर्मधारयः । **स्मरण**शब्दस्य **प्रत्यासत्ति**शब्देन षष्ठीसमासः । **लक्ष्यमाणे**त्यन्वयः । न चैवंभूतं स्मरणमेव नास्ति, कुतः तत्प्रत्यासत्तिरिति वक्तव्यम्, प्रमाणसिद्धत्वादित्युक्तं **दृश्यमानयेति** । एतच्च **'तदमूषामेव स्वार्थ-स्मृतीनां मानसीनाम्'** इत्यादेः सङ्ग्रह इति वेदितव्यम् । ननु जरद्गवादिवाक्येऽपि समभिव्याहारपदजाताहितप्रत्यासत्तिर्विद्यत एव । न च तत्र वाक्यार्थावबोधस्य सत्यत्वम्, अत उक्तम्—**अर्थगताकाङ्क्षेति** ॥ जरद्गवादिवाक्ये तु स्मरणप्रत्यासत्तिरेव केवला नाकाङ्क्षादित्रयसहकारिसाहित्यमिति भावः । शेषं सुगमम् ॥

अत्र **नयविवेककृतोक्तम्**—

"**वाचस्पत्युक्ता(क्तम्**—अ ?)न्विताभिधानपक्षेऽनेकत्र शब्दः (क्तिः ?) अन्वये स्वार्थे च । अभिहितान्वये त्वेकत्र स्वार्थे ।

---

१. 'पदजातजातस्मरणस्वार्थप्रत्यासत्त्या' इति मु. पु. पाठः ।

* (तदेवं......प्रत्यासत्त्या)—'अनुपपद्यमानः संसृष्टतात्पर्यकत्वाभावेऽनुपपन्नः पदान्तरसमभिव्याहारो यस्य तादृशेन पदजातेन पदसमूहेन जातं स्मरणं यस्य तादृशस्यार्थस्य प्रत्यासत्त्या सम्बन्धेनेत्यर्थः । ' इति टिप्पणी ।

२. 'दृश्यमानया दृश्यमानार्थगताकाङ्क्षायोग्यता सन्निधि' इति मु. पु. पाठः ।

† (अन्यलभ्यत्वात्)—'अनन्यलभ्यत्वादिति २ पु. पाठः' इति टिप्पणी ।

अन्वितावस्था तु लक्ष्यताम्, सम्बन्धात्, तत्परपदप्रयोगव्युत्पत्त्यनुपपत्त्या च। यथा मानान्तरदृष्टोऽर्थो लिङ्गम् अनुपपन्नो वा अन्वितधीहेतुस्तथा पदोक्तोऽपि व्युत्पत्त्यनुपपत्त्या अस्तु। वाच्येऽन्वयायोग्ये योग्यसम्बन्ध्यन्वयो लक्षणावृत्त्यां निरूढः, नेह तथेति चेत्—न। अनन्यलभ्ये शब्दशक्तिरिति वरं वाच्यानुपपत्तिमात्रात्सम्बन्धिस्वीकारमात्रं व्यापि लक्षणालक्षणमस्तु। अन्वितभेदावस्था सम्बन्धिनी न पूर्वदृष्टेति चेत्—न। सन्निध्याद्युपाधेः सामान्यतोऽन्वितभेदस्य धीस्थता अस्तु। सम्बन्धस्मृतावेव स्मृते स्वार्थमात्रे नाभिधातृतेति चेत्—न। शब्दादर्थधीरेवाभिधोच्यते लोके। अतः स्मृतिरप्यभिधा, व्युत्पत्तितः। स्मार्यस्मारकत्वादसत्यपि सम्बन्धान्तरे स्मृतिरस्तु, तन्न। अस्त्वेवमिति(स्त्वेवम्?)। एवं चेल्लक्षणा विधान्तरेण कल्प्या, कल्पनाद्वयं दुर्वारम्। स्मारकत्वे लक्षणाविधापदस्मारिते चेत्सेति (चेति?) सूक्तम् स्मारकत्वे कल्पनाद्वयम् अन्वयविशिष्टे चार्थे एकस्यैवैकत्र शक्तिः। उपेत्यैवेदमुक्तम् वृत्त्यन्तरेऽपि कल्प्यं(ल्प्ये) जघन्य(न्यं)धीहेतुत्वम्, वरं शक्तिः कल्प्या इति दिक्" इति॥

एतद्व्याख्यायते। "मतान्तरमुपन्यस्यति—वाचस्पत्युक्तमिति। ननु प्रसिद्धलक्षणाप्रयोजकरूपाभावान्नेयं लक्षणेति कथं तदपेक्षया शब्दतोऽभ्युपगम इति शङ्कते—वाच्येऽन्वयायोग्य इति। परिहरति—नानन्यलभ्य इति। यद्यपि प्रसिद्धलक्षणायां स्वार्थस्यान्वयायोग्यत्वं अन्यस्य तदर्हत्वं चास्ति तथापि व्यापि अ(वाच्या?)नुपपत्तिमात्रात् तत्सम्बन्धिमेयग्रहमात्रं तल्लक्षणमुपेयम्, न सम्बन्धिनोऽन्यान्वयोऽपि। शब्दस्य तद्धीजननशक्तिकल्पनापत्तेः, कल्पनायाश्चान्यथोपपत्तावयोगात्, इति लक्षणैवेत्यर्थः। ननु गङ्गाघोषादौ वाच्यसम्बन्धितया स्मर्यमाणस्य वाच्यानुपपत्त्यामेव तया ग्रहस्तत्र प्रसिद्धः। अन्वितरूपि(वि)शेषरूपवाक्यार्थस्य त्वननुभूतत्वादस्मर्यमाणस्य मेयत्वग्रहस्तत्तुल्यो नेति नेयं लक्षणेति शङ्कते—अन्वितभेदावस्थेति। परिहरति—न, सन्निध्याद्युपाधेरिति। पूर्वदृष्टोपाधिसामान्यस्यापूर्वविशेषवृत्त्यवगमे तदुपाधिसम्बन्ध्यनुभूतान्वितावस्था स्मृतिरननुभूतविशेषनिष्ठानुषङ्गः स्यात् इति स्मर्यमाणस्यैवानुपपत्त्या मेयत्वमत्रापीति प्रसिद्ध(द्धि)साम्याल्लक्षणैवेत्यर्थः।

स्यादेतत् । अस्तु लौकिकानां पदसङ्घातानां प्रेक्षावत्पुरुषसन्दृब्धानां सन्दर्भितुरभिप्रायमनुरुध्यमानानामनुपपत्त्या अनधिगतार्थलक्षणापरत्वम्, वैदिकानान्तु पुरुषासन्दृब्धानामबुद्धिपूर्वाणां नानुपपत्तिः, *ययाऽन्वितावस्थां लक्षयेयुः । य एव लौकिकाः शब्दास्त एव वैदिका अपीति

---

नन्वेवमप्यभिहितान्वयो न सिद्ध्येत्, स्वार्थमात्रस्यानधिगतत्वाभावात् स्मृतिमात्राङ्गत्वादिति शङ्कते—सम्बन्धस्मृतावेव स्मृते स्वार्थमात्रादि(त्र इ ?)ति । परिहरति—न, शब्दादर्थधीरेवेति । न स्मृतिव्यतिरेकाभिप्राया अभिधोक्तिः, स्मृतिविशेषार्थतया वृद्धप्रसिद्धेरित्यर्थः । ननु स्मृत्यनतिरेके स्मृतिहेतुसम्बन्धासिद्धिर्दोष इत्यत्राह—स्मार्यस्मारकत्वादिति ॥ संस्कारोद्बोधमात्रं हि तदपेक्षितम्, न सम्बन्ध एव, पुरुषान्तरस्मृतिकरत्वावगतिमात्रेणापि तदुद्बोधसम्भवात्स्मृत्युपपत्तेः सम्बन्धान्तराभावेऽपि न हानिरित्यर्थः । एवं शक्तिलाघवमुक्तेनापि तत्समर्थनमयुक्तमिति(त्याह–तन्न ।?) . . . अस्त्वेवमिति । विशिष्टार्थपरपदप्रयोगव्युत्पत्तिः पदार्थस्य तत्प्रमितिकरत्वापादिका लक्षणायामित्येतदेव तावदसिद्धम्, तदभ्युपगमोऽस्ती(स्त्व ?)ति दर्शितः । तथापि प्रसिद्धलक्षणातो विधान्तरकल्पनयैवं लक्षणा गतिरिहोपेयेति कल्पनागौरवं प्र(भा ?)करोक्त(प्रकरणोक्त ?)मलङ्घ्यमेवेत्यर्थः । ननु पदार्थमात्रे स्मारकत्वोपगमान्न गौरवमित्यत्राह—स्मारकत्वमि(त्व इ ?)ति . . . . . . . . . व्यवहितलक्षणाया अपि दृष्टत्वादर्थस्मारितस्यापि क्लृप्तप्रमितिकरत्वाविशेषादव्यवस्थाप्रसङ्गे सर्ववाक्यसाधारणं प्रमितिकरत्वं पदस्मारितमात्रस्यैवेत्युपेयमिति कल्पनाद्वयमुक्तमलङ्घ्यमेव । अन्विताभिधाने तु एकैव शक्तिरिति स्थितमेवेत्यर्थः । ग्रन्थोक्तानुसारादियं गौरवोक्तिः, वस्तुतस्तु शब्दप्रयोगानुपपत्तिगम्यं प्रमितिकरत्वं शब्दस्यैवोपेयम्, स्वतः प्राप्तस्य साक्षात्त्वस्य बाधापत्तेरित्याह—

---

१. 'स्यादेतत्' इत्यारभ्य 'वैदिका अपीति चेत्' इत्यन्तो ग्रन्थः यथामुद्रितपुस्तकं दीयते, व्याख्यायां ग्रन्थपातात् ।

* (यया)—'तात्पर्यानुपपत्त्येत्यर्थः' इति टिप्पणी ।

चेत्, तर्हि गङ्गायां घोष इति गङ्गाशब्दो लाक्षणिक इति गङ्गायां पयांसि यादांसि गङ्गायामित्यत्रापि स एव लाक्षणिकोऽस्तु । अनुपपत्तिविरहान्नैवमिति चेत्—समानमेतदबुद्धिपूर्वकेषु वैदिकेष्वपि । *अथ परस्यापि वैदिकेषु

---

उपेत्यैवेदमुक्तमिति । ननु क्लृप्तशक्त्युपजीवनसम्भवे साक्षात्त्वहानिर्न दोषः । क्लृप्ता च शक्तिः लक्षणायाम्; स्मर्यमाणस्यार्थस्यान्वयप्रमितौ तदस्मृतौ तदभावात् । तदस्य चामुख्ये धीशक्त्यनुपगमात्तदन्वयपरपदोक्त्यनुपपत्तिसहायवत्तया चेति शङ्कानिवर्तकहेत्वर्थो दिगुक्तिः । नान्वयप्रमितिशक्तिस्मर्यमाणस्यार्थस्य न क्लृप्ता पदैः स्वार्थान्वयोक्तौ तदनुषङ्गसिद्धं स्मरणप्रतियोगिनः तदुक्तप्रमितिविषयत्वं[1] (?) . . . . . तज्जननशक्ति (?) . . . . . . . . . . . . . . . . . . . . . . . . . . . न लक्षणापेक्ष इत्यभिप्रायेणाह—**तर्हि गङ्गायां घोषः . . . . . . . . लाक्षणिकोऽस्तु** ॥ क्वचित्तु 'पयांसि गङ्गायामितीहापि' इति पाठः । सिद्धान्तिन एवाभिप्रायमाशङ्कते—**अनुपपत्तिविरहान्नैवमिति चेत्** ॥ यथा जात्यादिशब्दानां व्यक्तिलक्षणा लोकवेदयोरविशिष्टा । एवमन्वितावस्थालक्षणापि समभिव्याहारान्यथानुपपत्त्येति भावः । परिहरति—**समानमेतदबुद्धिपूर्वकेषु वैदिकेष्वपि** ॥ **एतदिति** ॥ अनुपपत्ति(राहित्यमित्यर्थः ?) । अनुपपत्तिराहित्ये हेतुः अबुद्धिपूर्वकत्वम् । अबुद्धिपूर्वकत्वात्—अपौरुषेयत्वात् । ततश्च न हि लौकिका(र्थपरेष्विवात्र समभिव्याहारान्यथा ?)नुपपत्तिप्रकारसम्भवः । अनुपपत्त्यभावे च न लक्षणा । अभिधानं त्वबुद्धिपूर्वकत्वेऽपि शब्द(?) . . . . व्यापारोऽपि सम्भवत्येव, न लक्षणा कारणाभावादिति भावः । अतोऽत्राव्यापकत्वान्न लाक्षणिकत्वं वाक्या(र्थस्य), किन्त्वाभिधानिकत्वमेवेति सिद्धम् । सम्प्रति सिद्धान्ती परिहारमाह—**अथ परस्यापि** . . . . . . . .

---

* (अथ परस्यापि)—'अन्विताभिधानवादं दूषयति—अथेति । लोकेऽर्थान्तरान्वितस्वार्थे पदानां सामर्थ्यग्रहादगृहीतसङ्गतिकस्य स्वर्गापूर्वादेर्वैदिकबोधविषयत्वासम्भवादिति भावः ।' इति टिप्पणी ।

1. मातृकायां एकपत्रपरिमितग्रन्थपातः ।

पदसन्दर्भेषु कुतोऽनधिगतार्थबोधनम् । अर्थान्तरान्विते स्वार्थे पदसामर्थ्यावगमाल्लोके वैदिकानां पदानां लौकिकेभ्यो-ऽनन्यत्वादिति चेत्—तन्न । लौकिकानि वचनानि पुरुषाधीनरचनतया तदभिप्रायानुरोधीनि नान्वितार्थपर-तया तमवगमयितुमीशते इति वृथा अर्थान्तरान्वितस्वार्थ-कल्पना तेषाम् ॥

---

बोधनम् ॥ परस्यापीति ॥ अन्विताभिधानवादिनोऽपि । कुत इति । निष्कारणत्वादिति भावः । न लक्षणावन्निष्कारणत्वमभिधानस्य, शब्दव्यव-(हाराधीनसमयज्ञा ?)नपेक्षितत्वा(नापेक्षत्वा ?)दित्यभिप्रायेणान्विताभि-धानवादी चोदयति—अर्थान्तरान्विते स्वार्थे . . . . . . अनन्यत्वा-दिति चेत् ॥ एतच्च 'कुतः' इति प्रश्नस्योत्तरम् । लोक इत्यन्त एको हेतुः । यथोक्तम्–('व्यवहारे च) यथाव्यतिपङ्गमेवावापोद्धारौ'। 'अस्यार्थः– वृद्धव्यवहारे च यथाव्यतिपङ्गम्–व्यतिपङ्गमनतिक्रम्य–(आवापोद्धारौ)। तथा हि—'गामानय' इत्यानयत्यन्वितस्यैव गोरावापः 'महिषमानय' इति तदन्वितस्यैवो(द्धारः,) तेनान्वित एव शब्दस्य सामर्थ्यमवसीयते। तच्च द्विधा सम्भवति । साक्षाद्वाभिधाने(न), पदार्थप्रतिपत्त्यवा(न्तर-व्यव)धानेन वेति सम्प्रधारणीयम् । न तत्र साक्षात्सम्भवे प्रणाडी-समाश्रयणमुचितमित्यन्विता(भिधानमेव) निश्चीयते' इति । लौकिके-भ्योऽनन्यत्वं लोकवेदाधिकरणे स्थितमिति । परिहरति—तन्न । लौकिकानि . . . . . . तमवगमयितुमीशते ॥ तदभिप्रायानुरोधी-नीति ॥ 'पौ(रुषेयाद्वचना)त्—एवमयं पुरुषो वेदेति प्रत्ययः, नैव(मय)मर्थः' इति न्यायादिति भावः । तमिति–अन्वितार्थमिति । ततः किमित्याह—इति वृथा अर्थान्तरान्वितस्वार्थकल्पना तेषाम् ॥

---

१. 'वैदिकानां च लौकिकेभ्यः' इति मु. पु. पाठः ।

२. 'लौकिकपदानि हि पुरुषाधीनरचनया तदभिप्रायानुरोधेनान्वितार्थपरतया' इति मु. पु. पाठः ।

३. 'इति किमर्थान्तरान्वितस्वार्थाभिधानकल्पनया' इति मु. पु. पाठः । 'पदैरर्थस्वरूपमात्रोपस्थितौ वक्तृतात्पर्यज्ञानवशात् तत्संसर्गबोध इति भावः ।' इति टिप्पणी ।

**वृथेति** ॥ असत्या निर्विषयेति यावत् । **तेषाम्**—लौकिकानां वचनाना-मिति । इदमाकूतम् । एवं हि वदतो(न्तो) भवन्ति भवन्तो—वाक्यं तावन्न चक्षुरादिवदपरामृश्य ज्ञापकं भवति । तत्र पदपदार्थसम्बन्ध-संवेदनतत्स्मरणाकाङ्क्षासन्निधियोग्यत्वपरामर्शतात्पर्यज्ञानानामभावेऽभि-धानमेव न भवति । यत्रापि 'नद्यास्तीरे फलानि सन्ति' इत्यादौ पश्चाद्व्यभिचारः तत्रापि कस्य वैकल्यात्प्रमाणज्ञानं नोत्पद्यत इति विचार्यम् । वक्तृदोषाच्छक्तिप्रतिबन्ध इति चेन्न । तर्हि प्राचीनं विज्ञानमभिधानं न स्यात्, शब्दशक्त्यजन्यत्वात् । शब्दशक्तिजन्यं प्रमाणमभिधानमित्युच्यते । तत्र धूमादिष्विव परामृश्य ज्ञापकानां परामृश्यमानवैकल्याज्ज्ञानानुदय इति वाच्यम् । तत्र तात्पर्यनिश्चये-ऽभिधानं भवति तात्पर्यानिश्चये न भवतीत्याश्रयणीयम् । तदनिश्चयश्च विविधाभिप्रायाधीनत्वाद्वाक्यस्य । ननु भ्रमाद्यभावे यथार्थतात्पर्य-निश्चय इति चेन्न । तन्निरासान्तर्गतं सम्यग्ज्ञानम्, न (ज्ञेयमव-शिष्यते ?) । तथा हि—ज्ञानचिकीर्षाप्रयत्ना वाक्यप्रयोगकारणम् । तद्दोषेषु भ्रमादिषु निराकृतेषु अन्तर्गतं सम्यग्ज्ञानमिति, न तु ज्ञेयमवशिष्यते । ननु केन तर्हि ज्ञानानुमानम् ? उच्यते । यो वाक्य-प्रयोगेष्वाशयादिदोषरहितोऽयमिति निरूपितस्वभावः तस्य वचन-श्रवणानन्तरमस्मिन्नपि प्रयोगे आशयादिदोषरहितोऽयम्, तत्पुरुषत्वादिति यावदेव नानुमीयते तावद्यथार्थतात्पर्यनिश्चयो नास्ति, अयोग्यपद-सन्निधानाशङ्कापि नापैति, विस्मृततत्स्वभावस्य शङ्कोदयदर्शनात् । यस्तु निरूपितविपरीतस्वभावः तस्य वचनाद्भ्रमादिरेवानुमीयते । अनिरूपि-तोभयस्वभाववाक्ये प्रथमं शङ्कैव, पश्चाद्देशकालादिना तत्स्वभावमवगम्य भ्रमाद्यभावे सम्यग्ज्ञानमनुमीयते । एवं ज्ञानानुमाने ज्ञेयभूतवाक्यार्थ-स्यापि नान्तरीयकसिद्धत्वाद्वाक्यं पश्चादनुवादकं भवतीत्यादि । तदेत-दयु(दु ?)क्तम् । **लौकिकानि वचनानि पुरुषाधीनरचनतया तदभि-प्रायानुरोधीनीति** ॥

अत्र ब्रूमः । यत्तावदुक्तम्—वाक्यन्तावन्न चक्षुरादिवदित्यादि, तदयुक्तम्, असिद्धत्वात् । यथाहुः—

'अत्यन्तासत्यपि ज्ञानमर्थे शक्तिः(ब्दः) करोति हि ।' इति ।

वार्तिककारीयैरप्युक्तम्—'इन्द्रियादेरिव शङ्कितव्यभिचारादपि वाक्याद्वाक्यार्थप्रत्ययः प्रथममुपजनित एव पश्चादन्यतः शङ्कितव्यभिचारोऽपि व्यभिचारनिदानभूतप्रमादिचतुष्टयाभावनिश्चयात्प्रमाणमिति निर्श्रीयते'। यत्पुनः सत् ज्ञानमर्थप्रतिपत्तिं जनयति न तस्य शङ्कितव्यभिचारस्य तज्जनकत्वमित्युक्तम् । तदयुक्तम्, तादृशत्वाप्रेरव्यभिचारस्मृत्यपेक्ष-प्रमितिसाधनत्वाल्लिङ्गत्व(ङ्ग ?)प्रयुक्तत्वात्। अन्यथा—कथञ्चित्साधर्म्येण शाब्देऽपि तदापत्तौ—यदर्थान्तरप्रतिपत्तिं जनयति तत् ज्ञातमाशङ्कित-व्यभिचारं च जनयति यथा लिङ्गम्, इत्यतादृशस्येन्द्रियस्यार्थप्रतिपत्त्य-जनकत्वप्रसङ्गादिति । तथा हि वाक्यं तावन्न चक्षुरादिवदपरामृश्य ज्ञापकमित्यत्र प्रष्टव्यम्—किं ज्ञापकशब्देनाभिधायकत्वं विवक्षितम् ? उत बोधकत्वमात्रम् । अत्र बोधकत्वे तादृशत्वमङ्गीक्रियत एव, अभिधायकत्वं तु वाक्यस्यासिद्धमेव, पदमात्रस्य पदार्थमात्राभिधानाङ्गीकरणात् । तत्र च पदपदार्थसम्बन्धपरामर्शमात्रस्यैवाश्रयणात् आकाङ्क्षासन्निधियोग्यत्वपरामर्शाः तात्पर्यज्ञानं च पदार्थानां वाक्यार्थं बोधयतामितिकर्तव्यतैव । अतस्तयोरभावेऽप्यभिधानं भवत्येव । अपि च, 'नद्यास्तीरे फलानि सन्ति' इत्यादौ च यत्र पश्चाद्व्यभिचारः तत्रापि न प्रमाणज्ञानकारणवैकल्येन तदनुपपत्ति(नुत्पत्ति)मात्रम् । किन्तु भ्रान्ति-ज्ञानकारणसमर्थैः(सामर्थ्यतः ?) तदुत्पत्तिरेवेति कस्य वैकल्याज्ज्ञानानुत्पत्तिरिति न विचारणीयम्, यतो नेयं प्रमाणज्ञानानुत्पत्तिः, किन्त्वप्रमाणज्ञानोत्पत्तिरेवेत्युक्तम् । यत्तु—तत्र तात्पर्यनिश्चयेऽभिधानं भवति, तात्पर्यानिश्चये न भवतीत्याश्रयणीयम्, तदनिश्चयश्च विविधाभिप्रायाधीनत्वाद्वाक्यार्थ(क्य ?)स्येति । तदयुक्तम् । उत्पन्ने वाक्यार्थज्ञाने पश्चात्सन्देहे सति सन्देहापनयनमात्रे तात्पर्यनिश्चयः कारणं न ज्ञानोत्पत्तावेवेति स्थितेः । अपि च, सिद्ध एव प्रथममभिधाने विविधाभिप्रायत्वाद्यथा(र्थ ?)तात्पर्यसन्देहे प्र(भ्र ?)माद्यभावेन यथार्थतात्पर्यनिश्चयमात्रमेवाभ्यर्थ्यते, अभिधानन्तु प्रागेव सिद्धम् । न च प्र(भ्र ?)मादि-निरासान्तर्गतं सम्यग्ज्ञानम् । तथा हि—ज्ञानचिकीर्षाप्रयत्ना वाक्य-प्रयोगकारणम् । तद्दोषेषु भ्रमादिषु निराकृतेष्वाशङ्कामात्रमपनीयते । उत्पन्नन्तु पूर्वज्ञानं स्वविषये प्रमाणमेवावतिष्ठते। ततो ज्ञेयमवशिष्यत एव ॥

ननु—

भ्रमादिषु निरस्तेषु तात्पर्यावगतेः परम् ।
वाक्याभिधा भ्रमादीनां निरासे हेतुराप्तधीः ॥

अत्र दोषचतुष्टयरहितपुरुषप्रणीतं वाक्यं ज्ञानानुमानात्पूर्वं नाभिधायकम्, तात्पर्यज्ञानसामग्रीरहितत्वात् । तात्पर्यज्ञानञ्चाभिधानकारणतया व्युत्पत्तिसिद्धम् । अन्यपराच्छब्दादनभिधानात् । वेदे च पदपदार्थतासाम्या(तात्पर्या?)धीनं तात्पर्यावधारणम्, लोके चाभिप्रायाधीनं तात्पर्यम् । विविधाभिप्रायाश्च नरा वाक्यं रचयन्तो दृश्यन्ते भ्रमेणाशयदोषेणाशक्त्या प्रमादेन च । तत्राशयदोषादिशङ्कायां स्वार्थतात्पर्यानिश्चयेऽभिधानमेव न भवति, तन्निरासोत्तरकालं तात्पर्यनिश्चयेऽभिधानं भवतीति विवेक इति । उच्यते । उक्तोत्तरमेतत् । न हि तात्पर्यावधारणं सामग्रीनिविष्टम्, सन्देहापनयमात्रहेतुत्वात् । न च तात्पर्यज्ञानमभिधानकारणतया व्युत्पन्नम्, किन्त्वभिधायकानां तात्पर्यं गृहीतम्, तत्त्वभिधानकारणं वा कार्यं वेति निरूप्यत एव । अन्यपराच्छब्दादभिधानादर्शनमप्यसिद्धम् । 'गङ्गायां घोषः' इत्यादौ तस्यापि दृष्टत्वात् । न च स्मृतिमात्रं तत्र गङ्गार्थस्य नाभिधानमिति वाच्यम् । अभिधानस्य स्मरणत्वात् । तच्च वक्ष्यत एव । स्मृतेषु प्रथमं स्वार्थेषु पश्चादन्विताभिधानञ्च न सम्भवति । 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् । अन्यलभ्यत्वं च 'वाच्यरूपाविनाभूते'त्यारभ्य प्रतिपादितप्रायम् । किञ्च, यदि वक्तृज्ञानानुमानात्पूर्वं वाक्यं नाभिधायकं केन तर्हि ज्ञानानुमानमुच्यते । यो वाक्यप्रयोगेष्वाशयादिदोषरहितोऽयमिति निरूपितपूर्वस्वभावः तस्य वचनश्रवणानन्तरं तस्मिन्नपि प्रयोगे आशयदोषरहितोऽयं तत्पुरुषत्वादिति यावन्नानुमीयते तावद्यथार्थतात्पर्यनिश्चयो नास्ति, अयोग्यपदसन्निधानशङ्कापि नापैति, विस्मृततत्स्वभावस्य शङ्कोदयदर्शनात् । यस्तु निरूपितविपरीतस्वभावः तस्य वचनाद्भ्रमादिरेवानुमीयते । अनिरूपितोभयवाक्ये प्रथमं शङ्कैव । पश्चाद्देशकालादिना तत्स्वभावमवगम्य भ्रमाद्यभावे सम्यग्ज्ञानमनुमीयते । एवं ज्ञानानुमाने ज्ञेयभूत-

वाक्यार्थस्यापि नान्तरीयकसिद्धत्वाद्वाक्यं पश्चादनुवादकं भवतीति । नैवम् । शङ्कायामपि वक्तुर्मनश्चक्षुरादिशङ्केव जायताम् । नान्निगमे निर्दोषाद्वाक्याद्वेदवदभिधानमेवास्तु न तत्र सम्यग्ज्ञानान्तर्ग(नावग ?)-तिरस्ति । यद्यपि वाक्यप्रयोगस्य ज्ञानादिरेव साक्षात्कारणम् , न चक्षुरादि, तथापि हेतुनिषेधेन ज्ञानदोषनिषेध एव सेत्स्यति । अतो ज्ञानहेतु-दोषाभावात्तत्कार्यज्ञानदोषाभावसिद्धेरभिधानमनुमानात्प्रागेवास्तु । एवं च विदितसङ्गतेस्तात्पर्यज्ञानात्पूर्वमेव वाक्यं स्वार्थबोधकमित्युक्तम् । एवञ्च ज्ञानविशेषमनवगम्य सामान्येन ज्ञानस्य निर्दोषतामवधारयतो-ऽभिधानं सिद्ध्येत् । यद्याप्तत्वं ज्ञानस्य निर्दोषत्वम् । अथ यथार्थ-दर्शित्वम् यथादृष्टार्थवादित्वम् च पुरुषधर्म आप्तत्वम् , तथापि प्रथम-प्रयोगमारभ्य तस्य सकृदेव निश्चितत्वात्तद्वाक्यादभिधानं प्रागेवानुमाना-त्सिद्ध्यति । यद्यपि प्रथमप्रयोगोपाधित्वमाप्तत्वस्यास्ति, तथापि तदीय-प्रयोगसामान्यस्योपाधित्वात्सकृदेव ग्रहणसम्भवः । यद्यप्यदुष्टोऽयमिति सामान्येनावगतम्, तथापीदानीमयमदुष्ट इति ज्ञानं तात्पर्योपयोगीनि चेत्—न । सामान्यावगतस्मृतेरेवापेक्षितत्वात् । येन हेतुना सकृदाप्त-मवधारितम्, तेनैव ज्ञानमप्यवगंस्यते इति चेत्—न । सामान्येनाव-गतत्वात् । एतदीयं ज्ञानमदुष्टमिति विशेषज्ञानस्यादुष्टत्वात् । कथ-ञ्चानवगते वाक्यार्थे तद्विषयं ज्ञानमनुमीयते । पदैः पदार्थेषु स्मारितेषु आकाङ्क्षादिवशेन तदन्वयप्रतिपादनयोग्यत्वपरामर्शो भवति । तद्विषयं वक्तुर्ज्ञानमनुमीयत इति चेत्—न । उक्तोत्तरत्वात् । न ह्यभिधाना-दन्यत्पदैः पदार्थानां स्मरणमस्ति । अभिधानमेव चेत्—अभिहितान्वय-स्वीकार एव भवेत् । अपि च यदि स्मृतानां पदार्थानां आकाङ्क्षादिवशेन स्वान्वयप्रतिपादनयोग्यत्वमस्ति किमर्थन्तर्हि पदेन तेषामन्विताभिधान-मङ्गीक्रियते । शाब्दत्वायेति चेत्—तत्त्वन्यथापि सेत्स्यतीति वक्ष्यते । किञ्च परामृष्टे त्वन्वययोग्यत्वे नान्तरीयकसिद्धत्वादन्वितान्वययोरप्राप्ते च शास्त्रस्यार्थवत्त्वादन्विताभिधानभङ्गः । परामर्शश्च तर्कापरपर्यायः । प्रमाणेतिकर्तव्यताकोटिरिति चेत्—सत्यम्, तथापि 'प्रमाणं स्मृतिश्च प्रत्ययः' इति गुरुवचनात्प्रमाणत्वं वा स्मृतित्वं वा परामर्शस्य स्यात् । सर्वथा यथार्थज्ञानत्वात्प्राप्तत्वेनाभिधानभञ्जकत्वमिति ॥

अपि च

'स्मरणव्यतिरिक्तत्वान्मानपक्षं विगाहते'

इति वदतां प्रामाण्यमेवाभिमतमिति । अपि चाभिधानात्प्रागनुमानमिच्छतां पश्चादनुवादत्वेनाभिधानमपि न सिद्ध्यति । तथा हि—पदस्मारितानां पदार्थानामाकाङ्क्षादित्रयशालिनामन्वयस्य सिद्धत्वात् न पुनरन्विताभिधानावकाशः । एतच्च **न्यायरत्नमालायां पार्थसारथिमिश्रै**रभिहितान्वयनिर्णये प्रपञ्चितमनुसन्धेयम् ॥

तथा हि—

अभिधानत एवेष्टा यद्येषान्वयधीस्तव ।
कथं घोषाद्य(न्वयः स्या)त्तीरादेरभिधानतः ॥

तीरस्वरूपमपि न गङ्गाशब्दोऽभिधास्यति ।
प्रागेवान्वितमत्राह गङ्गाशब्देन केवलम् ॥

स्मारिते स्वनिमित्तार्थे सति तत्समवायतः ।
स्मारितं तीररूपं यत्तेन स्वार्थं समन्वितम् ॥

घोषशब्दोऽभिधत्ते नो गङ्गाशब्दस्तु केवलम् ।
तीरस्मृत्युपयोगीति यत्न तर्हि श्रुतं पदम् ॥

सर्वं लाक्षणिकार्थं न किञ्चिन्मुख्यार्थभाग्भवेत् ।
अन्वितार्थप्रतीतिस्ते कथन्तत्र भविष्यति ॥

'अस्ति वा तादृशं वाक्यं यत्न मुख्यो न विद्यते ।
कार्यं तदन्वितं वापि' पदानां विषयो मतः ॥

कार्यं वाच्यं लिङादीनामन्येषान्तु तदन्वितम् ।
प्रश्नप्रत्युक्तिरूपस्तु प्रयोगः शब्दगोचरः ॥

दृश्यते कार्यशून्यो यः कुतूहलवतां नृणाम् ।
'कोऽयं गच्छति भूपालो गच्छती'त्यादिकं बहु ॥

कवीनाञ्च विशिष्टार्थवर्णनारूप ईक्ष्यते ।
'नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः ॥

राम(माः)कौशेयसंवीताः प्रदृश्यन्ति कदम्बकाः
(कादम्बा इव शोभनाः) ।'

स लाक्षणिक एवेति भवतां समयः स्थितः ॥

तत्रापि चान्वये संविदुदेत्येव न चान्यमो ।
पदे(द ?) हेतुरुदेतीति शक्यमत्रोपवर्णनम् ॥

गच्छतेः कार्यवाचित्वाद्भूमिपालपदस्य च ।
कार्यान्विताभिधायित्वान्नाकाङ्क्षादिविशेषणैः ॥

त्रिभिरेवाभिधानन्ते सिद्ध्येदन्वितगोचरम् ।
वाच्यकोटौ निविष्टत्वात्कार्यकार्यान्वितत्वयोः ॥

भूमिपालपदेनातो नाभिधेयो भवन्मते ।
गच्छत्यर्थान्वितः स्वार्थो वाच्यो गच्छतिना न च ॥

भूमिपालान्वितस्वार्थो भवत्यन्वयधीस्ततः ।
पदकारणिका नैवेत्यतो वाक्यमिदन्त्वया ॥

अभिधानं पदार्थानां पदैर्नैवेह सम्मतम् ।
अन्वयस्य निमित्तं यदर्थरूपमवस्थितम् ॥

तत्तावत्स्मर्यते पश्चात्स्मृतैः स्वार्थैर्मिथोऽन्वयः ।
आकाङ्क्षायोग्यतासत्तिसध्रीचीनैः करिष्यते ॥

इत्यवश्यमकामेनाप्यनुज्ञातव्यमापतेत् ।
ततश्च सर्वदैवास्तु तथैवाभिधया विना ॥

किमन्विताभिधानेन बहूपद्रवकारिणा ।
'अथ तत्रानुमानेन संविदन्वितगोचरा ॥

जायते न पदैर्नापि पदार्थैरिति मन्यसे ।'
न हि सिद्धार्थवाक्येषु पदेभ्योऽन्वयधीर्मता ॥

न पदार्थनिमित्ता वा भवेत्किन्त्वनुमानतः ।
निर्मितिः पौरुषेयी हि वाक्यानामुपलक्षिता ॥

विशिष्टार्थविवक्षायाः समनन्तरभाविनी ।
ततश्च सा हेतुभूतां विवक्षामनुमापयेत् ॥

स्वकारणञ्च विज्ञानं सानुमापयति स्थितम् ।
ज्ञानेन च स्वविषयः पदार्थानां समन्वयः ॥

अनुमीयत एवं च सिद्धे सत्यनुमानतः ।
पदार्थानाञ्च हेतुत्वं नैवान्वितधियं प्रति ॥

आद्रियामह एवं च न विरोधः प्रसज्यते ।
यद्येवमिष्यते दोषस्तवैषोऽपि प्रसज्यते ॥

'यत्रापि कार्यसंवित्तिस्तत्राप्येवं भविष्यति ।
पदानामपि सामर्थ्यं अन्वितेऽर्थे न सिद्ध्यति ॥'

सिद्धार्थवाक्यविषया या त्वयोक्तानुमाततिः ।
प्रवर्तकेष्वपि तथैवास्तु वाक्यार्थधीस्तव ॥

पदानामन्विते शक्तिरिष्यते केन हेतुना ।
ततश्च सर्वसिद्धान्तभङ्ग इत्यत्र चोद्यते ॥

'यदर्थविषयं वाक्यं तेनासावनुमीयते ।
नान्यस्तेनान्विते सिद्ध्येत्पदानां शक्तिनिर्णयः ॥'

विशिष्टार्थव्यवहृतौ विशिष्टार्थैकगोचरम् ।
विज्ञानं कारणमिति नात्र कश्चिद्विचारभाक् ॥

तदेतद्वाक्यमात्रेण न प्रसिद्ध्यति कुत्रचित् ।
विशिष्टवाक्यार्थमतिर्विशिष्टादेव वाक्यतः ॥

वाक्यार्थभेदाभिधानाद्वाक्यस्य च विशिष्टता ।
तथा चोत्तमवृद्धोक्तवाक्यस्य समनन्तरम् ॥

प्रयोज्यवृद्धचेष्टातो विशिष्टार्थधियोऽनुमा ।
तस्याश्च कारणत्वेन वाक्यमेवेह कल्प्यते ॥

वाक्येन च विशिष्टार्थसंविदुत्पत्तिहेतुना ।
स्वकारणतया वक्तुर्विवक्षापि प्रकल्प्यते ॥

विवक्षया विशिष्टार्थे वक्तुर्ज्ञानं प्रकल्प्यते ।
एवं प्रयोज्यवृद्धस्य विशिष्टव्यवहर्तृता ॥

नान्यथातोऽभ्युपेतव्या विशिष्टार्थाभिधायिता ।
वाक्यस्य सा चावयवैः पदैरेवेत्यवस्थितम् ॥

अतोऽन्विताभिधायित्वं पदानां सिद्धमुच्यते ।
'पार्थिवो गच्छती'त्यादेः सिद्धार्थादपि वाक्यतः ॥

राजगन्त्रादिको व्यक्तं विशिष्टोऽर्थोऽवगम्यते ।
विशिष्टविषयं ज्ञानमेतद्वाक्यकृतं स्फुटम् ॥

विशिष्टविषया वक्तुर्विवक्षा च प्रकल्प्यते ।
तत्कारणतया वक्तुर्विशिष्टज्ञानमेव च ॥

एतत्सर्वं तदेवं(तदैव ?) स्याद्वाक्यं चेत्प्रतिपादकम् ।
नान्यथा तेन सिद्धार्थे वाक्ये कार्याभिधायिनाम् ॥

तदन्विताभिधातॄणामभिधाया असम्भवात् ।
पदार्थैः स्मारितैरेव पदार्थप्रतिपादनम् ॥

भवद्भिरभ्युपेतव्यं नान्या तत्रास्ति ते गतिः ।
यद्युच्येतेह नावश्यमन्वितप्रतिपादकम् (कान् ?) ॥

वाक्यादेवानुमीयेत धीर्विशिष्टार्थगोचरा ।
विशिष्टार्थस्मारिका या पदपङ्क्तिस्तयैव हि ॥

सिद्ध्येद्विशिष्टज्ञानं नो विनाप्यभिधया यतः ।
तथा हीदृग्व्यापि(प्ति)संविद्येषामाप्तः पदान्यसौ ॥

इतरेतरयोग्यानां पदार्थानां विवक्षया ।
उच्चारयति तेषां स विजानीते समन्वयम् ॥

एवं सति पदार्थानामन्वयं प्रति हेतुता ।
नाङ्गीकार्या पदैरेव विशिष्टरचनान्वितैः ॥

ज्ञानानुमानद्वारेण वाक्ये सिद्धार्थगोचरे ।
विशिष्टवाक्यार्थधियोऽप्यनुमानस्य सम्भवात् ॥

न पदार्थनिमित्तत्वं वाक्यार्थस्य प्रसिद्ध्यति ।
एवं तर्हि विधा यैषा सिद्धवाक्यार्थगोचरा ॥

तयैव कार्यवाक्यार्थविज्ञानमपि सेत्स्यति ।
'गामानये'त्यादिषु ते पदार्थैः पदबोधितैः ॥

विशिष्टवाक्यार्थधियः सिद्धत्वादन्विताभिधा ।
कुतः सिद्ध्येदतो येऽमी पदार्थाः पदबोधिताः ॥

तैरेव वाक्यार्थधियः सिद्धत्वान्नान्विताभिधा ॥

एवं स्वरूपाभिहितैः पदार्थैः
वाक्यार्थसंविद्भवतोऽपि सिद्ध्येत् ।
स्वरूपमात्रं च न वाभिधेयं
पदैस्तु वाक्यार्थधियोऽनुमानात् ॥

यथा पदविशेषाणां व्याप्तिर्वाचकशक्तिभिः ।
तथा विशिष्टज्ञाने च व्याप्तिग्रहणसम्भवः ॥

पदार्थजनितेनैव धूमधूमध्वजादिवत् ।
सास्नादिभिर्विशिष्टस्य गोशब्दोऽयन्तु वाचकः ॥

अश्वशब्दो वाजिनोऽयमिति वाचकशक्तिता ।
यथा य(त)था तत्तदन्वितार्थगोचरसंविदा ॥

तस्य तस्य पदस्ये(स्यै)व ग्रहीतुं शक्यते स्फुटम् ।
आप्तस्य गोपदादीनां रचनेयं प्रतीयताम् ॥

आकाङ्क्षायोग्यतासत्तिसध्रीचीनान्यवस्तुना ।
अन्वितार्थज्ञानपूर्वेत्येवं व्याप्तिग्रहे सति ॥

'अर्थस्वरूपवाचित्वमपि नैव प्रसिद्ध्यति ।
प्रागेवान्वितवाचित्वमतो वेदाप्रमाणता ॥'

वक्तृज्ञानानुमाद्वारं वाक्यार्थप्रतिपादनम् ।
अपौरुषेयवेदस्य न हि सम्भवमर्हति ॥

अप्रमाणत्वमेव स्याद्वेदस्य भवतां मते ।
ननु व्युत्पत्तिवेलायां वाक्यानन्तरभाविनीम् ॥

प्रयोज्यचेष्टामालक्ष्य धीर्विशिष्टार्थगोचरा ।
कल्प्यते तस्य बालेन हेतुरात्मनिदर्शनात् ॥

सा च शब्दानन्तरत्वात्तत्कार्येति ततः परम् ।
शब्दस्य तत्र शब्द(क्त)त्वं कल्प्यतेऽनुपपत्तितः ॥

पश्चाच्च कस्यचिद्वक्तुरन्यथार्थपदाश्रयाम् ।
रचनामुपलभ्यासौ कथं नु व्यभिचारिणः ॥

वाक्यात्प्रयोज्यवृद्धस्य धीर्विशिष्टार्थगोचरा ।
जातेति विचिकित्सेँ(त्स्यै)वमवधारयति स्फुटम् ॥

अनेन नूनं वक्तायमित्यभूदवधारिनः ।
न युज्यतेऽस्यान्वि(नास्य युक्तानन्वि?)नार्थपदसन्दर्भकारिना ॥

तेन नूनमनेनैपामन्वयोऽन्यवधारितः ।
इति ज्ञानानुमाद्वारमर्थं निश्चिनवानसौ ॥

इति कल्पयति ज्ञाना शक्तिर्वा(न्किं वा?) शब्दगोचरा(राम्?) ।
न तां मिथ्येति मनुते तस्माद्वाचकता स्थिना ॥

नैतत्सारतया ग्राह्यं यदनेनेह वर्णितम् ।
'न हि कार्यादि(द)तज्जन्या श(न्याच्छ)क्तिः शब्दस्य कल्प्यते ॥
स्यात्तु तज्जन्यतामात्रे(ताभ्रन्तेः) भ्रान्तिः सा च निवर्त्स्यति ।'
न हि प्रयोज्यवृद्धस्य शब्दानन्तरभाविनी ॥

प्रतीतिः शब्दजन्या यत्तस्य शक्तिं प्रकल्पयेत् ।
शब्दानुमितवक्तृस्थकार्यलिङ्गप्रसूर्हि सा ॥

न चान्यतोऽस्य निष्पन्नं कार्यमन्यस्य शक्तताम् ।
कल्पयत्यव्यवस्था स्यात् कार्यकारणयोस्तथा ॥

यद्यप्यभूदवस्थायां तादृश्यामन्यजन्यता ।
न स्फुटावधृतेत्येवं शब्दानन्तरजन्यता(म्?) ॥

भ्रान्त्यावगम्य शब्दस्य शक्त्या भ्रान्त्या निरूपणम् ।
तथापि पूर्ववत्पश्चादतज्जन्यत्वनिश्चयात् ॥

तज्जन्यत्वभ्रमे नष्टे तत्कार्यः शक्तिविभ्रमः ।
निवर्तते पुनर्बाष्पकृतवह्न्यनुमानवत् ॥

तद्धि साक्षादबाध्यं सल्लिङ्गबाधां नि(धाम्नि?)वर्तते ।
तथा शब्दे वाचकत्वकल्पनापि निवर्तते ॥

कार्यस्यातज्जन्यतेति कृत्वा पूर्वोक्तया दिशा ।
नन्वस्त्वनुमितोऽप्यर्थः पश्चादस्यानुवादकृत् ॥
वाक्य(क्यं ?)वाचकशक्तं स्यान्न मानाभावनिश्चयात् ।
अन्तरेणानुमान(वाद ?)त्वं किं वेहानुपपत्तिमत् ॥
यतः कल्प्येत शक्तत्वादनुवादकतेति चेत् ।
अन्योन्याश्रयमापन्नं दुरुत्तरमिदं तव ॥
शक्तिसिद्ध्य(द्ध्या ?)नुवादत्वं तस्माच्छक्तत्वमेव च ।
तस्मान्न वाचकत्वस्य सिद्धिरस्ति कदाचन ॥
तैरेवं तत्र कथितमास्तां तावदियं कथा ॥

एतत्सर्वं हृदि निधायोक्तम्—**तन्नेत्यादि** ॥ अयमर्थः । यानि **लौकिकानि** प्रत्ययितप्रणीतान्यप्रत्ययितप्रणीतानि च **वचनानि** तानि पुरुषेष्वधीना रचना येषां तानि **पुरुषाधीनरचनानि**, तत्तया कारणेन पुरुषाभिप्रायानुरोधीनि । त(य ?)था हि आशयादिदोषवतोऽनाप्तस्य वाक्याद्भ्रमादिरेवानुमीयते, अनिरूपितोभयस्वभावस्य वाक्यात्प्रमाणान्तरेण सम्यग्ज्ञानं वा भ्रमादिर्वानुमीयते, एवमाप्तवाक्यादपि ज्ञानमेवानुमीयते, वक्तृज्ञानाधीनत्वात्पुरुषवचसाम्; अतोऽनाप्तवाक्यवदाप्तवचसामपि नाभिधायकत्वम् ॥

ननु तात्पर्यनिश्चयोऽपि सम्बन्धसंवेदनादिवदभिधानकारणतया व्युत्पत्तिसिद्ध एवेत्युक्तम् । तत्र तात्पर्यानिश्चयादभिधानं मा भूदनाप्तवाक्येषु, आप्तवाक्येषु त्वभिधानं तात्पर्यनिश्चयानन्तरं भवत्येव, अन्यथा व्यवहारावसितशक्तिबाधप्रसङ्गात् । एवं हि शक्तिविषय एवार्थे सन्देहात्तदज्ञा(त्तज्ज्ञा ?)नानुमानात्तात्पर्यानि(र्यनि ?)श्चये नैवास्ति शक्तिभङ्गः । किन्तु पुरुषसम्बन्धोपाधिनानुभूता शक्तिरुपाधिविगमे निरुपद्रवमवतिष्ठते, अतो न कश्चिद्दोषः; अत उक्तम्—**नान्वितार्थपरतया तमवगमयितुमीशत इति** ॥ यद्यन्वितार्थे तात्पर्यं निश्चितं अभिधानात्पूर्वं तत्सिद्धये, तर्ह्यन्वितस्य पूर्वमेव ज्ञातत्वान्न वचसां तद्बोधने शक्तत्वम्, 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् । एवं च व्यवहारेऽपि शक्तिः भ्रान्त्यैवावसिता न पारमार्थ(र्थि)क्येवेत्युक्तमिति वृथा

तथा सति वैदिकार्थप्रतीतिरनुपपन्नेति चेत—

---

अर्थान्तरान्वितस्वार्थाभिधानशक्तिकल्पना नेयातीति । चोदयति—तथा सति ...... अनुपपन्नेति चेत् ॥ इदमाकूतम्—अभिहितान्वये तावन्न वेदप्रामाण्यं सिद्ध्यतीत्युक्तम् । तदन्विताभिधानमपि न स्वीक्रियते लौकिकानां वाक्यानाम्, तर्हि कुतो वेदवाक्याद्वाक्यार्थावगतिः सिद्ध्येत् ॥ यथोक्तम्—

"व्यतिषक्ताभिधानं किं पदमेव(वं) कल्पयति ।"

"नानन्विताभिधायी शब्द इष्टो भवति"। '(न) भवत्व(वत्वन)न्विताभिधायिता(यी), तथापि किमित्याह—"ततश्च कार्यान्विताभिधायिता लोके नियोगस्यावगता"। अस्यार्थः—आचार्योदितवाक्येषु देवदत्त ! 'समिधमाहर' इत्यादिषु प्रवर्तमाने देवदत्ते पार्श्वस्थ (एव)मवधारयति—बुद्धिपूर्विकेयमस्य प्रवृत्तिः; यथाहं बुद्ध्वा प्रवृत्तः तदयमपि, मदविशेषात्; अहं च न क्रियामात्रावगमात् प्रवृत्तः, नापि फलमात्रावगमात्, नापि फलसाधनत्वावगमात्, किन्तु कार्यावगमात्; स्नानपानादिकापि क्रिया यावन्मया कार्यतया अनवगता तावदहं न प्रवृत्तः । न च या श्रेयस्साधनता सैव कार्यता । श्रेयः प्रति साधनत्वमन्यत्, अन्यच्च कृतिं पुरुषप्रयत्नं प्रति प्राधान्यं साध्यत्वलक्षणं कार्यत्वम्; क्लेशात्मनस्तु कर्मणः फलसाधनत्वानुविधायिनी कार्यतेति मन्दा अभेदं प्रतिपन्नवन्तः। तथा सुखस्य फलसाधनतां विना कार्यावगतिरस्ति । अतः फलसाधनतातिरिक्तकार्यबोधात् प्रवृत्तिर्ममेति देवदत्तोऽपि तदवगमादेव प्रवर्तत इति कल्पयति । तदवगमश्चास्य शब्दानन्तरं भवच्छ(च्छ)ब्दनिबन्धन एवेति कार्याभिधायितां लिङ्शब्दस्य कल्पयति । तच्च कार्यमन्वितमभिधेयमिति स्थिते 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिषु वाक्येषु पष्ठाद्यराद्धान्तानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीय इति । यश्च कार्यमवबुद्ध्यते स नियोज्यः । स्वर्गकामस्य च तस्मिन्नेव कार्ये नियोज्यतया अन्वयः, यदेव तस्य काम्यमानसाधनतामनुभवितुं क्षमते । न च क्रिया क्षणभङ्गिनी कालान्तरभाविफले हेतुर्भवति । तेन सा कार्यतया नियोज्येन सहा(ह ना)न्वीयते । यत्तु

मोपपपादि। किं नश्छिन्नं नैयायिकानाम्। मानानुसारि हि प्रयोजनम् न तु तदनुसारि मानम्। तस्मात्स्वदृष्टिपक्षपातं परित्यज्यास्थायास्तिकपथमृजुमनुसरावो निमित्तमप्रत्यूह-

---

कालान्तरस्थायि कार्यम्, तदेव तेन सहान्वयं गन्तुमर्हतीति क्रियातिरेकि मानान्तरावेद्यमेव लिङादयः कार्यमभिदधति। तच्च मानान्तरापूर्वत्वादपूर्व(मित्युच्यते। ननु तस्यापि कार्यस्य कुतः सिद्धिः? यागादेरिति चेत्,) अनन्तरभाविता तर्हि फलस्य प्रसक्ता, क्रियानन्तरभाविनस्तस्य फलहेतुत्वात्। उच्यते (—अनन्तरभावित्वेऽपि तस्य न फलमनन्तरं) भविष्यति, सहकारिव्यपेक्षया विलम्बनोपपत्तेः। स च (न च) सहकारिव्यपेक्षायां कारणभाव(हानिः। किं तत्सहकारीति चेत्, देशकालादिकमिति) ब्रूमः। न (च) तस्य विशेषज्ञानमन्तरेण कश्चिदुपा(?) (किञ्चिद्दुष्यति। न च) फलजनकतया गुणभावादपूर्व(स्य वाक्यार्थत्वहानिः; स्वानुगुणनि)योज्यलाभाय फलानुकूलतावलम्बनात् स्वामिवत्। यथा यथात्मन एव संविदा(दधा)नः स्वामी (गर्भदासस्योपकरोति, तद्वदेतदपि। ततश्चान्वि)ताभिधाने स्थिते कार्याभिधायिता लोके नियोगस्य लिङादेरवगता(तेति। "अतो नियोगाभिधानम्" इति वक्ष्य)माणेन सम्बन्धः। नियोगशब्देन क्रियाव्यतिरिक्तमपूर्वं कार्यतया आत्मनि पुरुषं नियुङ्क्ते(?) (नियुञ्जानमुच्यते। न चैवं वेदत एव) व्युत्पत्तिः, लोकव्युत्पत्ति(त्ते)रेव वेदवाक्यानुसारेणापूर्वपर्यन्ततावगमात्। (ननु न लोके कार्याभिधायिता लिङादेरस्तीत्यत्राह—) "आचार्यचोदितः करोमि इति हि दर्शितम्"। चोदितः—प्रवर्तितः। क(?) (कार्यमवबोधित) इत्युच्यते; नान्यथा चेतनः प्रवर्तयितुं शक्यते यतः। "ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके"। तत्कथं कार्याभिधायित्वमेव लिङादेरित्यर्थः। परिहरति—"उपाधयो हि ते, न शब्दार्थाः"। एतदेव विपरीतं(विवरीतुं) पृच्छति—"के पुनरमी उपा(धयो नाम)"[२]

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

---

१. इतः परं यथामुद्रितपुस्तकं मूले पाठो दीयते, व्याख्यायां ग्रन्थपातात्।

२. अत्र ग्रन्थपातः मातृकायाम्। इतः परं व्याख्याग्रन्थो नोपलभ्यते।

मस्या वैदिकार्थप्रतीतेः । तत्रानादिवृद्धव्यवहारपरम्परायां पदतदर्थसम्बन्धबोधोपाये सति अगत्यापि सम्बन्धेऽपि शब्दादर्थप्रतीतेरुपपत्तेः अर्थभेदनिरूपणस्य च ज्ञानभेदनिबन्धनत्वात् ज्ञानभेदस्यार्थभेदात्तदनभिधानेऽभिधानाभावात् अर्थभेदाभिधाने वा तत एव सिद्धेस्तदभिधानानुपपत्तेः तद्धेतुनया तु तत्कल्पने ताल्वादिव्यापारस्यापि वाच्यत्वप्रसङ्गात् स्वाभाविकः शब्दार्थयोः *सम्बन्ध इति स्थितिः । †स तु किमर्थान्तरान्वितस्यार्थस्य, अर्थरूपमात्रस्य वा ; यदापि रूपमात्रमुच्यते पदैः तदापि ‡किं तन्मात्रपरैः, आहोस्विदन्वितावस्थाप्रत्यायनपरैः । तत्र रूपमात्रप्रत्यायनपरत्वे पदानां वाक्यार्थप्रत्ययानुपपत्तेः अप्रयोजनस्य §प्रयोजनासम्भवादत्यन्तान्धमूकं जगत्प्रसज्येत । ||तदुभयं परिशिष्यते

---

* (सम्बन्ध इति स्थितिः)—'वृद्धव्यवहारपरम्परारूपे शब्दार्थसम्बन्धज्ञानकारणे सति 'अनेन शब्देनायं बोध्यः' इत्युपदेष्टर्यसत्यपि बोधदर्शनात्तदर्थगतभेदप्रतिपादनस्य तत्तद्विषयकज्ञानाकारभेदप्रयुक्तत्वाज्ज्ञानगतवैलक्षण्यस्य विषयतासम्बन्धेन तत्तदर्थरूपतया अर्थभेदात् ज्ञानगतवैलक्षण्यस्य वस्तुनः सत्त्वेऽपि तस्य बोधविषयत्वाभावेन पदेषु तत्तज्ज्ञानगतवैलक्षण्यनिरूपितशक्तेर्वक्तुमशक्यतया अर्थानामिव तत्तदर्थगतवैलक्षण्यस्यापि वाच्यत्वाङ्गीकारे तावन्मात्रेण शक्त्यैवेतरव्यावृत्ततत्तदर्थविषयकशाब्दधिय उपपादयितुं शक्यतया अन्वयांशे पदवाच्यताभ्युपगमवैयर्थ्यादर्थगतवैलक्षण्यबोधस्य त्वन्वयप्रयोज्यत्वमात्रेण स्वरूपतोऽर्थभेदात्तद्वैलक्षण्यनिर्वाहकान्वयांशस्यापि वाच्यत्वाभ्युपगमे भिन्नभिन्नार्थबोधकारणीभूतपदप्रत्यक्षकारणपदोच्चारणकुक्षिप्रविष्टताल्वादिव्यापारस्यापि परम्परयेतरव्यावृत्तार्थबोधं प्रत्युपयोगित्वेनानिष्टस्य वाच्यत्वस्यापत्तेः शब्दार्थसम्बन्धः स्वाभाविक एवेति सिद्धान्त इत्यर्थः ।' इति टिप्पणी ।

† (सः)—'सम्बन्धः' इति टिप्पणी ।

‡ (किं)—'किमिति २ पु. नास्ति' इति टिप्पणी ।

§ (प्रयोजनासम्भवात्)—'स्वरूपमात्रतात्पर्यकैः पदैः तात्पर्यविषयस्य संसर्गस्य बोधनीयत्वासम्भवादित्यर्थः ।' इति टिप्पणी ।

|| (उभयम्)—'अर्थान्तरान्वितस्वार्थाभिधायकत्वं अन्वितावस्थाप्रत्यायनतात्पर्यकत्वं च' इति टिप्पणी ।

लौकिकपदसन्दर्भस्य विशिष्टार्थप्रत्यायनप्रयोजनपरस्य । तत्रार्थान्तरान्वयपरस्य स्वार्थमात्राभिधानेऽप्यन्वितप्रतिपत्तेरुपपत्तेरर्थापत्तिपरीक्षया अत्रान्वयं (परिक्षयान्नान्वयं?) यावत्पदस्य सामर्थ्यमनुवर्तनीयम्* । तथा हि—वृद्धप्रयुक्तवाक्यश्रवणसमनन्तरं प्रवृत्तिनिवृत्तिहर्षशोकभयसम्प्रतिपत्तेः व्युत्पन्नस्य व्युत्पित्सुस्तद्धेतुप्रत्ययमनुमिमीते । तस्य सत्स्वप्यन्येष्वनुपजातस्य पदजातश्रवणसमनन्तरं सम्भवतः †तद्धेतुभावमवधारयति । न चैष प्रत्ययः पदार्थमात्रगोचरः ‡प्रवृत्त्यादिभ्यः कल्प्यत इति विशिष्टार्थगोचरोऽभ्युपेयते, तद्विशिष्टार्थपरता अवसिता वृद्धव्यवहारे पदानाम् । न चेयमविशिष्टार्थस्मरणमन्तरेणेत्यविशिष्टार्थस्मारकत्वं§ ||तदुत्पत्त्यैव प्रत्युक्तम् । न चैतदेषां विशिष्टार्थतामुपहन्तुमर्हति । न जातु भावाः स्वनिमित्तमुपघ्नन्ति, मोपघानिषत स्वमपीति । न चैतावता विशिष्टाभिधानम् । अविशिष्टविषयेभ्योऽपि

---

* (सामर्थ्यमनुवर्तनीयम्)—'स्वार्थमात्रनिरूपितशक्तिस्वीकारेऽपि पदसमूहस्य विशिष्टार्थबोधतात्पर्यकत्वेऽन्वयप्रतीतेः पदविशेष्यकतात्पर्यज्ञानेनैवोपपत्तेः 'यजेत स्वर्गकामः' इत्यादावपूर्वेऽर्थापत्तिलभ्ये पदानामशक्यार्थान्तर इवान्वयांशेऽपि (न?) सामर्थ्यमङ्गीकार्यमित्यर्थः' इति टिप्पणी ।

† (तद्धेतुभावम्)—'तत्कारणकत्वम् । वाक्यकारणकत्वमिति यावत्' इति टिप्पणी ।

‡ (प्रवृत्त्यादिभ्यः कल्प्यते)—'प्रवृत्त्यादीनां पदार्थमात्रप्रतीत्या अनुपपत्तेः प्रवृत्त्यादय एव विशिष्टार्थप्रतीत्यनुमापका इति भावः ।' इति टिप्पणी ।

§ (अविशिष्टार्थस्मारकत्वम्)—'विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मप्रकारकनिश्चयस्य च हेतुत्वात्' इति टिप्पणी ।

|| (तदुत्पत्त्यैव प्रत्युक्तम्)—'विशिष्टविषयकबोधोत्पत्त्यैव पदानामविशिष्टार्थस्मारकत्वमाक्षिप्तमित्यर्थः ।' इति टिप्पणी ।

*तत्परेभ्यस्तदुपपद्यते । तस्माल्लोकानुसारेण वैदिकस्यापि पदसन्दर्भस्य विशिष्टार्थप्रत्ययप्रयुक्तस्याविशिष्टार्थाभिधानमात्रेण †लक्षणया विशिष्टार्थगमकत्वम् । स्वार्थमात्रपरत्वे तु प्रयोजनाभावेन ‡तस्याप्यनुपपत्तेः । यथाहुरत्रभवन्तो §वार्तिककारमिश्राः—

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां ||प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥'

तथा च

'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः' ॥

इति । ¶अन्वितेऽर्थे तात्पर्याभ्युपगमात् तदभिधायित्वं

---

* (तत्परेभ्यस्तदुपपद्यते)—'असंसृष्टस्वार्थमात्रनिरूपिताभिधाख्यवृत्तिविशिष्टेभ्यः पदेभ्यो विशिष्टार्थतात्पर्यकेभ्यस्तात्पर्येणैव संसृष्टार्थप्रतीत्युपपत्तेः संसृष्टनिरूपिता अभिधा न स्वीक्रियत इत्यर्थः ।' इति टिप्पणी ।

† (लक्षणया)—'लोके वक्त्रभिप्रायरूपतात्पर्यसम्भवेऽप्यपौरुषेयेषु वैदिकवाक्येषु तदसम्भवाच्छक्त्या पदार्थमात्रोपस्थितावपि लक्षणया संसृष्टार्थबोधजनकत्वमित्यर्थः ।' इति टिप्पणी ।

‡ (तस्याप्यनुपपत्तेः)—'तदन्यप्रतीतीच्छयानुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपेण तात्पर्येण युक्तस्य वैदिकपदजातस्य स्वार्थमात्रे प्रदर्शिततात्पर्यस्वीकारे प्रयोजनभूतस्य प्रवृत्त्यादेः स्वरूपमात्रज्ञानेनासम्भवात्प्राक् प्रदर्शितरीत्यानुमितिकारणीभूतप्रवृत्त्याद्यभावेन स्वार्थमात्रबोधस्याप्यनुपपत्तेरिति भावः । एवं च स्वरूपमात्राभिधानेन प्रयोजनशून्येषु वैदिकपदेषु लक्षणाश्रयणेन संसृष्टबोधाङ्गीकारेऽपि निर्विशेषात्मतत्त्वबोधनेन निखिलप्रपञ्चबाधरूपपरमप्रयोजनसंपादकेषु महावाक्येषु तत्त्वमस्यादिषु नान्वयांशे लक्षणेति भावः । अत्र भूमिकानुसन्धेया' इति टिप्पणी ।

§ (वार्तिककारमिश्राः)—श्लोकवार्तिके वाक्याधिकरणे श्लो० ३३९ ? (३४२, ३४३) इति टिप्पणी ।

|| (प्रवृत्तौ नान्तरीयकम्)—'प्रवृत्ताविति फले निमित्ते सप्तमी । प्रवृत्त्यर्थम्—आश्रितवाक्यार्थबोधार्थम् । नान्तरीयकम्–प्रदर्शितदिशा आवश्यकम्' इति टिप्पणी ।

¶ (अन्वितेऽर्थे)—'शक्यविषयस्यापि तात्पर्यविषयत्वमात्रेण बोधाभ्युपगमेऽतिप्रसङ्गं मन्यमानः शङ्कते' इति टिप्पणी ।

पदानामिति चेत्, तर्त्कि 'गङ्गायां घोषः' इत्यत्र गङ्गापदं तीराभिधायि भवेत्, तत्र तात्पर्यात्। न*; स्मारितस्वार्थप्रत्यासत्त्यापि तदवगतेर्न तत्परस्यापि तदभिधानमिति यद्युच्येत तदितरत्रापि समानमुक्तेन क्रमेण†। तस्मादनेकान्तं तात्पर्यं न बीजं ‡सामर्थ्यसाधने। न जातु ज्वलन्ति काष्ठानि §पाकपराण्यपि पाके साक्षात्समर्थानि, किन्तु ज्वलन एव, तया द्वारा तत्सिद्धेः। तेषामतुल्यकक्ष्याणां प्राथम्यं न विशेषायोपयुज्यते, येन पदानां तदर्थेभ्यः प्राथम्येनान्वितार्थधियं प्रति ‖सामर्थ्यं कल्प्येत। दर्शिता त्वतुल्यकक्ष्यता, रूपमात्राभिधानात्, अन्विताभिधाने गौरवात्। न च पदार्थानामुपलभ्यमानाकाङ्क्षादिसहकारिणां विशिष्टार्थधीजन्मनि सामर्थ्यमपरं कल्पनीयम्¶, **तेभ्य एव तादृग्भ्यस्तदुत्पत्तेरुपपत्तेः। न चैते मानान्तरदृष्टा अर्था न ††विशिष्टार्थबुद्धेरीशते। तथा हि—यत एवानुमानभावमर्था-

---

* (न)—'न। अभिधायकत्वं तस्येष्टमिति शेषः।' इति टिप्पणी।

† (उक्तेन क्रमेण)—'लक्षणयापि विशिष्टधीसम्भवादिति भावः' इति टिप्पणी।

‡ (सामर्थ्यसाधने)—'शक्तिसाधने' इति टिप्पणी।

§ (पाकपराण्यपि)—'पाकसम्पादकान्यपि। पाकेच्छयोपात्तान्यपीति यावत्।' इति टिप्पणी।

‖ (सामर्थ्यं कल्प्येत)—'अन्यथाप्युपपद्यमानानां विशिष्टज्ञानानां प्रवृत्त्यादिहेतुकानुमितिप्राथमिकविषयत्वं शक्त्यनुमापने न पर्याप्तमित्यर्थः।' इति टिप्पणी।

¶ (अपरं कल्पनीयम्)—'प्रत्यक्षादिनावगतानां श्वैत्यखुरनिष्पेषशब्दश्रवणादीनां विशिष्टार्थबोधजनकत्वस्य प्रागुपपादितत्वात्तथैव पदैरुपस्थितानां अप्यर्थानां विशिष्टानुभवजनकत्वाभ्युपगमे कारणत्वकल्पनाधिक्यं नेति भावः।' इति टिप्पणी।

** (तेभ्य एव)—'येभ्य एवेति २ पु. पाठः' इति टिप्पणी।

†† (विशिष्टार्थबुद्धेः)—'मानान्तरदृष्टानर्थानविशिष्टार्थबुद्धेरिति २ पु. पाठः' इति टिप्पणी।

पत्तिभावं वा समापन्ना दृष्टा विशिष्टार्थधियमादधाना यथा तथा आधास्यन्ति तामेव तत्परैः* स्मारिताः सन्तः शब्दत्व†मापन्नाः । ‡अनुपपत्तिसम्बन्धमात्रप्रभावितं च तात्पर्यमुपपादके न शक्तिमपेक्षते, गङ्गादिपदानां च काष्ठादीनां च तीरादौ पाकादौ च कल्पनाप्रसङ्गादित्युक्तम् । §न च सर्वत्र स्वार्थपरित्यागेनैव लक्षणेत्यैकान्तिकम् । लक्षणीयानुरोधेनैव हि सर्वत्र परिग्रहपरित्यागौ । तद्यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन घोषप्रतिवासार्हतीरलक्षणया स्वार्थस्य गङ्गायास्त्यागः, 'दण्डिनो गच्छन्ति' इत्यत्र तु दण्ड्यदण्डिपु समूहेषु लक्ष्यमाणेषु तदन्तर्गतस्याविशेषाद्दण्डिशब्दार्थस्य परिग्रहः, त(य?)था वेदे 'सृष्टीरुपदधाति' इत्यत्र ‖गणिकानां लक्ष्यमाणत्वे तदन्तर्गतस्यापि सृष्ट्यर्थस्य परिग्रहः, एवमिहापि व्यतिषक्तावस्थायां लक्ष्यमाणायां तदन्तर्गतस्यापि परिग्रहः, तदग्रहे ¶लक्ष्यमाणपरित्यागप्रसङ्गात् ।

* (तत्परैः)—'तत्पदैरिति २ पु. पाठ.' इति टिप्पणी ।

† (शब्दत्वम् )—'शब्दोपस्थिततत्वप्रकारकानुसन्धानविषयत्वम्' इति टिप्पणी ।

‡ (अनुपपत्तिसम्बन्ध ........ शक्तिमपेक्षते)—'पदार्थस्वरूपमात्रेऽनुपपत्त्या सम्बन्धेन प्रतियोगित्वादिना च केवलमुपपादितं वाक्यार्थसंसर्गनिरूपितं तात्पर्यं पदशक्तेर्गमकं न, तामन्तराप्युपपत्तेरित्यर्थः ।' इति टिप्पणी ।

§ (न च सर्वत्र)—'अन्वयांशे लक्षणामसहमानः शङ्कते' इति टिप्पणी ।

‖ (गणिकानाम् )—'तद्गणपठितानां सृष्टिशब्दरहितानामपि । शाबरभाष्ये अ० १. पा० ४. सू० २७' इति टिप्पणी ।

¶ (लक्ष्यमाणपरित्यागप्रसङ्गात् )—'संसर्गिणः पदार्थस्य परित्यागे संसर्गमात्रप्रतीतेर्निष्प्रयोजनत्वेन संसर्गस्यापि परित्यागप्रसङ्गादित्यर्थः ।' इति टिप्पणी ।

*लक्षणालक्षणायोगादलक्षणेति चेत्—न; †अलक्षणत्वात्। तत्रैतत्स्यात्—नेयं लक्षणा, सा किलाभिधेयस्यार्थस्यायोग्यतया अनुपपद्यमाने वाक्यार्थसम्बन्धे सति तत्सम्बन्धलब्धबुद्धिसन्निधौ वाक्यार्थसम्बन्धार्हे भवत्यर्थान्तरे; तथा आह कश्चित्—

'वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणेष्यते ॥'

न च 'ओदनं पचति चैत्रः पिठरे' इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थे सम्बन्धानर्हत्वम्; न च तल्लक्षिताया अन्विताबस्थाया अन्वयान्तरशालिता; न चैवं लक्षणा, ‡तल्लक्षणविरहात्—इति। तत्किमिदानीं न लक्षणेयमित्यनन्यलभ्यस्यापि शब्दार्थत्वमस्तु। न हि 'मासमग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रपदं अलाक्षणिकमिति मुख्यं भवति। कर्मान्तरसादृश्येन गौण्या वृत्त्या तत्र प्रवृत्त्युपपत्तेर्न तदभिधानशक्तिकल्पनेति चेत्, इहाप्युन्नीतया नीत्या अन्तरेणाप्यभिधानसामर्थ्यमन्विताबस्थाप्रतीत्युपपत्तेः कृतमभिधानशक्तितः। एवं च न चेदियं पदप्रवृत्तिर्लक्षणालक्षणमन्वेति,

---

* (लक्षणालक्षणायोगात्)— 'वक्ष्यमाणस्वार्थान्यपदार्थबोधकत्वघटितलक्षणालक्षणस्य स्वार्थसम्बन्धेऽभावादित्यर्थः।' इति टिप्पणी।

† (अलक्षणत्वात्)—'वक्ष्यमाणस्य लक्षणालक्षणस्य प्रदर्शयिष्यमाणदूषणेनाव्यापकत्वादिति भावः।' इति टिप्पणी।

‡ (तल्लक्षणविरहादिति)—'लक्षणयोपस्थिततीरादेः पश्चाद्बोधविषयत्वमिव प्रकृते लक्षितेन संसृष्टस्वार्थरूपेण प्रयोजनसिद्धेः पुनरन्वयान्तरस्यानुपयोगादनवस्थाप्रसङ्गाच्चेति भावः।' इति टिप्पणी।

भवतु तर्हि चतुर्थी, दृष्टत्वात् । अस्तु वा लक्षणैव । नो खल्वेतल्लक्षणम्; अप्रसिद्धवृत्त्यन्तरावतारप्रसङ्गात् । तस्मादेतद्वक्तव्यम् । तदिदमुच्यते—'मृष्यामहे वाच्यानुपपत्तितः' इति, 'सम्बन्धवशप्राप्तस्य' इति च, न पुनः 'वाक्यार्थे सम्बन्धे'ति च 'अन्वयात्' इति च । अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थरूपमात्रपरत्वे पदानामनुपपत्तिः *अर्थरूपसम्बन्धवशप्राप्तता चान्विताबस्थायाः । व्यापकं चैतल्लक्षणं लक्षणानामनवयवेन‡ वैदिकीनां च लौकिकीनां चेति चतुरस्रम् । अभिधावृत्तित्वं च पदानां रूपमात्रप्रज्ञापनेऽपि §न तेनोपपद्यते । अपि नाम पदानि साक्षाद्व्यापारेण बोधयन्त्यर्थान् वाक्यार्थमितये तद्बोधनमिति वाक्यार्थं लक्षयिष्यन्ति । तदवस्थाभेदस्य तैः सहादृष्टचरत्वेन बुद्धावसन्निधानादलक्षणेति चेत्—न । ||सामान्यतो दर्शनात्, पदार्थानां च तद्विशेषकत्वात् । नो खल्वन्वितेभ्यः पदार्थेभ्योऽन्यो¶ऽन्विताबस्थाविशेषः । तथा चार्थस्वरूपबोधनसामर्थ्या-

---

* (प्राप्तस्येति)—'इतिशब्दः २ पुस्तके नास्ति' इति टिप्पणी ।

† (अर्थरूपसम्बन्धवशप्राप्तता)—'अर्थसम्बन्धवत्प्राप्ततेति २ पु. पाठः' इति टिप्पणी ।

‡ (अनवयवेन)—'साकल्येन' इति टिप्पणी ।

§ (न तेनोपपद्यते)—'स्वरूपमात्रोपस्थापनेन न परिसमाप्यते, प्रयोजनवैकल्यादिति भावः ।' इति टिप्पणी ।

|| (सामान्यतः)—'अलक्षणनिवेशनसामान्यत इति २ पु. पाठः' इति टिप्पणी ।

¶ (अन्विताबस्थाविशेषः)—'तथा चेतरपदार्थान्वयेन विशेषरूपतामापन्नः संसृष्टोऽर्थः सामान्यविशेषभावसम्बन्धेन स्वरूपसम्बन्धीति तत्र लक्षणा युज्यते इति भावः । 'नो खल्वनन्वितेभ्यः पदार्थेभ्योऽन्यान्विताबस्थाविशेषेभ्यः इति २ पु. पाठः' इति टिप्पणी ।

न्नाधिकं *सामर्थ्यद्वयं कल्पयिष्यते । नाप्यभिधानशक्तेरेवान्वयाविषयत्वम्; अर्थस्वरूपमात्रगोचरत्वेऽपि तत्प्रतीत्युपपत्तेः । यदि पुनः प्रमाणसंशयविपर्ययेभ्यो †विधान्तरानुपगमान्न पदार्थबोधः ‡शब्दव्यापारजन्मोपेयते तर्हि स्मृतिरस्तु, न त्वेषा संस्कारोन्मेषमात्रप्रभवेति कृतमभिधातृभावेन §पदानाम् । तदुन्मेषे तदुपयोग इति चेत् हन्त! अर्थोऽप्यालोचितः स्वपदगोचरसंस्कारोद्बोधहेतुरिति सोऽपि पदस्याभिधाता स्यात् । तदिदमनभिधातृत्वमनधिगतान्वयबोध एव कल्प्यते पदानाम् ||नान्यथा । अथैवंवादी पृष्टो व्याचष्टाम्—को नु खल्वयमभिधाव्यापारः शब्दानाम्, येनामी तद्वन्तोऽन्वयस्याभिधातारः । न तावत्परिस्पन्दः; तस्य मूर्तानुविधायिनो द्रव्ये विभुनि विभुगुणे वा शब्दे मूर्त्यभावेनासम्भवात् । 'असर्वगतद्रव्यपरिमाणं मूर्तिः' इति हि ¶पदार्थविदः । नाप्यस्पन्दात्मा प्रयत्नादिरिवादृश्यमानः, प्रमाणाभावात् । अन्वयधियश्च

---

* (सामर्थ्यद्वयम्)—'प्रागुक्तं पदानामन्वयानुभवसामर्थ्यम्—अर्थस्वरूपाणां अन्वयानुभवसामर्थ्यं च । आद्यस्यान्यथाप्युपपद्यमानत्वादन्यस्य क्लृप्तत्वाच्चेति भावः' इति टिप्पणी ।

† (विधान्तर)—'विधानान्तरेति २ पु. पाठः' इति टिप्पणी ।

‡ (पदार्थबोधः)—'पदार्थानुभवः' इति टिप्पणी ।

§ (पदानाम्)—'पदानामभिधातृत्वेन पर्याप्तम्, तावन्मात्रेण प्रयोजनसिद्धेरिति भावः । 'युगपर्याप्तयोः कृतम्' इत्यमरः ।' इति टिप्पणी ।

|| (नान्यथा)—'अर्थवादादिवाक्येषु प्राशस्त्यादेरशक्यत्वेऽपि संसर्गस्य प्राथमिकशक्तिग्रहकालेऽवगतत्वात्संसर्गत्वेन संसर्गस्य शक्यतेति भावः ।' इति टिप्पणी ।

¶ (पदार्थविदः)—'वैशेषिकदर्शनप्रशस्तपादभाष्यटीकायां उदयनाचार्यकृतायां किरणावल्यां साधर्म्यप्रकरणे' इति टिप्पणी ।

कार्यस्य सति सङ्गतिसंवेदने *शब्दनिश्चयज्ञानादेवोत्पत्तेः । तस्मात्स्वगोचरं विज्ञानमेव शब्दानां व्यापारः स्वार्थबोधे । यथा आह भगवान्भाष्यकारः†—

'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति ॥

‡स एव स्वाभाविकशक्तिशालिनः शब्दस्य स्वशक्त्या अर्थधीहेतुतया अभिधेति गीयते । शब्दाभासस्यैन्द्रियकत्वेऽपि रूपतः सामर्थ्योपधानेनाभिधात्वात्तस्य चातीन्द्रियत्वादतीन्द्रियत्वमास्थिषताभिधायाः§ । न चेयं साक्षादर्थधियमाधत्ते, येन न तत्साधिका स्यात्, अपि तु संस्कारोद्बोधनक्रमेण । तथा च नार्थविषयविज्ञानं स्वपदगोचरसंस्कारोद्बोधनक्रमेण पदस्मरणमपि विदधदभिधा-शब्दगोचरः, अपि तु शब्दविषयं विज्ञानम्, तस्य च ||तद्भावनियमात् लौकिकपरीक्षकाणां प्रयोगसंप्रतिपत्तेः । प्रणिधानादिष्वपाठाच्छब्दस्य¶ न स्मारकत्वमिति चेत्—न ;

---

* (शब्दनिश्चयज्ञानादेवोत्पत्तेः)—'शब्दजन्यस्वार्थनिश्चयेनैवान्वयधिय उपपन्नत्वाद्व्यापारान्तरकल्पना अनुचितेति भावः' इति टिप्पणी ।

† (भाष्यकारः)—'शाबरभाष्ये अ० १. पा० १. अ० ५.' इति टिप्पणी ।

‡ (स एव)—'स्वविषयकज्ञानरूपव्यापार एव' इति टिप्पणी ।

§ (अभिधायाः)—'शब्दगताभिधाया अर्थबोधानुकूलसामर्थ्यरूपायाः कुक्षौ प्रविष्टस्यार्थस्यातीन्द्रियत्वेन तद्विशेषितसामर्थ्यस्याप्यतीन्द्रियत्वमाश्रीयत इत्यर्थः ।' इति टिप्पणी ।

|| (तद्भावनियमात्)—'शब्दविषयकज्ञानेन नियमतोऽर्थप्रत्ययस्यैवार्थज्ञानेन पदस्मरणनियमाभावादर्थगतकाचित्कपदोपस्थापकव्यापारस्य नाभिधात्वम्, नियमेनोपस्थापकव्यापारस्यैवाभिधात्वादिति भावः ।' इति टिप्पणी ।

¶ (शब्दस्य ...... अथापि स्यात्)—'शब्दस्य तत्स्मारकत्वमिति चेन्न । तत्सङ्गात्' इति २ पु. पाठः' । 'अथापि' इत्यत्र 'तथापीति च' इति टिप्पणी ।

तत्सम्बन्धात्। अथापि स्यात्, परिगणिता हि स्मृतिहेतवः— '*प्रणिधाननिबन्धनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माः'— प्रामाणिकैः। न चैतेषु किञ्चित्पदं तत्रार्थस्य स्मारकमिति चेत्— तन्न, अर्थसम्बन्धेन तदुपपत्तेः। सम्बन्धो हि स्मृतिहेतुषु पठितः, यतोऽन्तेवासिनो गुरुम् ऋत्विजो याज्यं †स्मरन्ति। (स चास्ति शब्दार्थयोरौत्पत्तिको) वाच्यवाचकभाव इति तदनुभवाहितभावनासहितं शब्दविज्ञानमन्वितार्थप्रत्यायनप्रयुक्तं स्वार्थं स्मारयिष्यति। वाच्यवाचकत्वं च प्रत्याय्यप्रत्यायकत्वम्, तच्च विचार्यमाणं स्मार्यस्मारकत्वमेव। ननु सम्बन्धान्तरेणाध्यापकाध्यापनीयभावादिना अन्तेवासी स्मरति गुरुम्, न ‡स्मारकत्वेनैव, तथैवेहापि सम्बन्धान्तरमनुसर्तव्यम्; न च तदस्ति, तत्कथमस्य स्मारकत्वम्; अन्विताभिधाने त्वभिधेयसाहचर्यमेवास्यास्ति सम्बन्धान्तरमिति युज्यते स्मारकत्वं पदानाम्। अथान्विताभिधाने- §ऽप्यन्वितप्रत्यायनाय किमस्ति सम्बन्धान्तरं पदानाम्। दृष्टा हि चक्षुरादयो धूमादयश्चार्थसन्निकर्षलक्षणनियत-

---

* (प्रणिधान...)—'गौतमसूत्रे अ० २. आ० २. सू० ४४. (३-२-४१)' इति टिप्पणी।

† (स्मरन्ति)—'स्मारयिष्यन्तीति ३ पु० पाठः ( ) एतदभ्यन्तरश्च पाठः ३ पु. नास्ति' इति टिप्पणी।

‡ (स्मारकत्वेनैव)—'स्मार्यस्मारकत्वेनैवेति २ पु. पाठः' इति टिप्पणी।

§ (अन्वितप्रत्यायनाय)—'अन्विताानुभवनिष्पत्तये। सामान्यतोऽन्वितस्योपस्थितत्वेनानुभवविषयताया असम्भवाद्विशेषस्य च सामान्यादभिन्नत्वेन सन्बन्धान्तरानुपपत्तेरिति भावः' इति टिप्पणी।

साहित्यादिलक्षणेन सम्बन्धान्तरेण प्रत्याययन्तो यथायथमर्थान् । यद्युच्येत विनापि सम्बन्धान्तरमौत्पत्तिकार्थप्रत्यायनशक्त्या वृद्धव्यवहारोन्नीतया प्रत्यायनमिति, तदत्रापि समानम् । इहापि तादृशस्यैव स्मृतिजननशक्त्या वृद्धव्यवहारोन्नीतया स्मारकत्वमस्तु पदानामर्थरूपे, तच्च स्वज्ञानमेव, तस्य चाभिधात्वमुपपादितमधस्तात् । तस्मादभिधातृत्वमपि *नान्विताभिधान इति कल्पनालाघवादाकाङ्क्षादिलक्षणसहकारिप्रत्यासन्नैश्च समभिव्याहृतपदस्मारितैः पदार्थैः प्रत्यासत्त्या गम्यमानो †वाक्यार्थो लाक्षणिकः शाब्दश्चेति रमणीयम् । तस्मात् ‡सुष्ठूक्तम्—'पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थमवगमयन्ति' इति ॥

तत्त्वबिन्दुपरामर्शपुष्टानां बुद्धिवीरुधः ।
वाक्यार्थधीसुमनसः पुरुषार्थफलप्रदाः ॥
वाक्यार्थमितये पुंसां भ्रमसन्तमसच्छिदा ।
इन्दुनेवामुना मार्गो दर्शितस्तत्त्वबिन्दुना ॥

इति आचार्यश्रीवाचस्पतिमिश्रविरचितः
तत्त्वबिन्दुः समाप्तः ॥

---

* (नान्विताभिधान इति)—'अन्विताभिधानवादे प्रदर्शितदिशा पदानामन्विताभिधातृत्वं न सिद्ध्यतीत्यर्थः ।' इति टिप्पणी ।

† (वाक्यार्थो लाक्षणिकः शाब्दश्चेति)—'संसर्गो लक्षणागम्यः स्वज्ञानादिपरम्परया पदजनितत्वेन शाब्दश्चेत्यर्थः ।' इति टिप्पणी ।

‡ (सुष्ठूक्तम्)—'शाबरभाष्ये अ० १. पा० १. सू० २५.' इति टिप्पणी ।

# APPENDIX I.

**[An Alphabetical Table of the Authors and their Works in the Pūrva-Mīmāṁsā-Śāstra, whose dates may be fixed between A. D. 1600 and 1850.]**

| Serial No. | AUTHOR. | WORK. | REMARKS. |
|---|---|---|---|
| 1 | *Aṇṇuśāstri*, son of *Rāmabudha* of *Prayāga gotra*—a member of the *Kaṇḍarmāṇikka Bṛhaccaraṇa* Brahmin Community—an inhabitant of the *Peralam* village in the Tanjore District. | *Tantradarpaṇa*—a commentary on the P. M. Sūtras, beginning with the second chapter. It belongs to the Bhāṭṭa school. | A Ms. preserved in the Madras Govt. Oriental Mss. Library, Madras. [R. Nos. 3879 (*b*) & 3886] |
| 2 | *Anantācārya.* | *Vidhisudhākara*—an independent treatise on the nature and scope of *vidhi*, *niṣedha* and *arthavādas*. It belongs to the Bhāṭṭa school. | Do. [No. 4477] |
| 3 | *Appayya Dīkṣita*, son of *Appā Dīkṣita* and a descendant of the famous Appayya Dīkṣita—patronised by one *Cinnabomma-* | *Durūhaśikṣā*—containing *seven* main sections beginning with *udāharaṇoddhārabhaṅga*,—a rejoinder against the refutations of the views of Appayya Dīkṣita | Do. [R. No. 3934 (*a*)] Whether this author is identical with the author of two works—(1) *Tantrasiddhāntadīpikā* and |

| Serial No. | AUTHOR. | WORK. | REMARKS. |
| --- | --- | --- | --- |
| | *bhūpāla*, minister of Cokkanātha (son of Cinnamāmbā) of Nalla Bomma family. | as embodied in his Vidhirasāyana. It also belongs to the Bhāṭṭa school. | (2) *Pūrvamīmāṁsāviṣayasaṅgrahadīpikā* (both described in the Introduction, p. 136) is not known. |
| 4 | *Ahobila* (or Aubhala or Aubala), son of one Mārayārya (?) of *Śrīvatsa gotra*. | *Vākyārtharatnamālā*—with his own gloss—*Tātparyaprakāśikā* or *Suvarṇamudrā*—an independent treatise dealing with the nature and scope of the *adhyayanavidhi*, refuting the view of *Kriyāsthāyitva* and elucidating the true import of *liṅpratyaya* viz., *apūrva* or *niyoga*, according to the Prābhākara school. | Preserved in the Madras Govt. Oriental Mss. Library. |
| 5 | *Udayapūjyapāda* (probably a Malabarian). | *Adhikaraṇaślokārthadīpikā*—in 48 verses with explanatory prose for the Tarkapāda, according to the Prābhākara school. | Do. [R. No. 2901] |
| 6 | *Uttamaślokatīrtha.* | *Laghuvārttikaṭīkā* or *Laghunyāyasudhā*, a good commentary on the Citrapaṭa, otherwise known as Laghuvārttika. | Do. The author of this work is known by the name *Uttamaślokatīrtha. cf.*—<br>" *Viśveśvarapreritena śritaviśveśamūrtinā;*<br>*Uttamaślokatīrthena tatprītyai grathitam sphuṭam.*" |

| | | | |
|---|---|---|---|
| 7 | *Keśava*, son of Viśvanātha. | *Mīmāṁsābālaprakāśavyākhyā*— (Bhāṭṭa school.) | *Vide* Dr. A. B. Keith's Karmamīmāṁsā, p. 13. |
| 8 | *Garuḍadhvaja*, son of Śrīnivāsa (by Alamelumaṅgā), and grandson of Sūryanārāyaṇa (the author of a commentary on the Śāstradīpikā). | *Tantrasiddhāntasaṅgraha*—a commentary on the P. M. Sūtras. (Bhāṭṭa school.) (It contains chapters VII & VIII complete and IX incomplete). | Preserved in the Madras Govt. Mss. Library. [R. No. 1803 (*a*)] |
| 9 | *Gopālabhaṭṭa.* | *Vidhirasāyanabhūṣaṇa.* | Mentioned by Dr. A. B. Keith in his Karmamīmāṁsā, p. 12. |
| 10 | *Govindabhaṭṭa.* | *Mīmāṁsānyāyasaṅgraha*—a commentary on the P. M. Sūtras according to the Prābhākara school. (It contains from the second pāda of the first adhyāya to the fifth pāda of the third adhyāya.) | Do. [R. No. 2768] It is mostly in verses except in *viṣayavākyas* and *saṁśayas*. |
| 11 | *Govindāmṛtamuni* alias *Devendrasarasvatī*, a disciple of Nārāyaṇāmṛtapūjyapāda. | *Vivaraṇa*—a commentary on the Śābarabhāṣya from the second pāda of the first adhyāya, according to the Bhāṭṭa school. | A portion of it is preserved in the Madras Govt. Mss. Libraries. [R. No. 2767]. A transcript of the same is available in the Ann. Univ. Library. |
| 12 | *Lakṣmaṇārya*, the son of Timmārya by Giryambā, the brother of one Śrīnivāsa, and the disciple of Śrīnivāsopādhyāya (probably his brother) who was well-versed in the Madhva System of Philosophy. | *Tantravilāsa*—containing refutations of the siddhāntas of some well-known adhikaraṇas like *guṇakāmādhikaraṇa*. It has *six* main sections. | He is later than Khaṇḍadeva and Gopnātha (the author of the Maṇisāra); so he might be placed between A. D. 1700 1800. Preserved in the Madras Govt. Mss. Library. [No. 4416 & R. No. 1341] |

